अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – ९३

श्रीनारायणतीर्थविरचिता

# भक्तिचन्द्रिका

## (शाण्डिल्यभक्तिसूत्रा–व्याख्यानस्य अध्ययनम्)

डॉ. रेणुका करंदीकर

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

**शीर्षकम्** – **भक्तिचन्द्रिका**

**लेखिका** – **डॉ. रेणुका करंदीकर**

**प्रधानसंपादक:** – **आचार्य: श्रीनिवास: वरखेडी**
कुलगुरु, क.का.सं.वि., रामटेकम्

**संपादक:** – **आचार्य: मधुसूदन: पेन्ना**
संचालक: संशोधन–प्रकाशनविभाग:
क.का.सं.वि., रामटेकम्

**संपादकमण्डलम्** – **डॉ. दिनकर मराठे,** क.का.सं.वि., रामटेक
**डॉ. वीना गाणु,** नागपुर.

**प्रकाशनवर्षम्** – **२०२०**

**आवृत्ति:** – **प्रथमा**

**मूल्यम्** – **रू. ४९७/–**

**आय.एस.बी.एन.** – **९७८–९३–८५७१०–५०–६**

**मुखपृष्ठम्** – **श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्**

**मुद्रक** – **अवधूत ग्रॉफिक्स ॲण्ड प्रिन्टींग, नागपूर.**

**प्रकाशक:** – **कुलसचिव:,**
**कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालय:,**
**प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.**

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU

## Kavikulaguru Kalidas Sanskrit University
## All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

### Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

### Patron
Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

### AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

### AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

### AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

### Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

### Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Shrinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# अनुक्रमणिका

प्रथमाध्यायः

# भक्तिसंप्रदायः

भारतभूमिः ईश्वरविषयिण्या निर्मलभावनया श्रद्धया च आप्लाविता। निर्मलभावः अभंगनिष्ठा चेत्येतयोः समन्वयेन भारतभूमौ नैके सात्त्विकप्रवाहाः निर्मिताः। एतैः सात्त्विकप्रवाहैः अर्थात् भक्तिमार्गैः भारतस्य सांस्कृतिकजीवनं समृद्धं कृतम्। **'भजनं भक्तिः' 'भज्यते अनया इति भक्तिः', 'भजन्ति अनया इति भक्तिः'** इत्येतादृश्यः भक्तिशब्दस्य व्युत्पत्तयः दृश्यन्ते।

**'भजन्ते इत्येष वै धातुः सेवायां परिकीर्तितः।**

**तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी।'**[1]

भक्तिः इत्ययं शब्दः 'भज्' सेवायाम् इत्येतस्मात् धातोः निष्पन्नः। भज् सेवायां इत्यस्य धातोः 'क्तिन्' प्रत्यये कृते 'भक्तिः' इत्ययं शब्दः निष्पद्यते। अत्र प्रत्ययस्यार्थः भावः इति, धातोः च 'सेवा' इत्यस्ति। प्रेम्णः पूर्णता सेवाभावे एव अस्ति। यद्यपि 'भक्तिः' इत्यस्यार्थः 'सेवा' इत्यस्ति तथापि केनापि प्रकारेण कृता सेवा भक्तिः इति न कथ्यते। **फलाभिसन्धानशून्या सेवैव भक्तिः**[2] इति कथ्यते। भक्तिः भागः चेत्येते समानार्थकशब्दौ। वैदिकवाङ्मये भक्तिः इत्यस्य शब्दस्य 'भागः', 'अवयव' इत्येतादृशः अर्थःदृश्यते। ऋग्वेदसंहितायां[4] 'भक्तये' इति चतुर्थीविभक्तिरूपं दृश्यते। तत्र भाष्यकाराः 'संभजनाय, लाभाय' अर्थात् विभागार्थमथवा विभागजनितलाभार्थम् इति कथयन्ति।भक्तशिरोमणिना महर्षिणा नारदेन स्वभक्तिसूत्रेषु भक्तेः परिभाषा ईदृशी कृता—

**'सा त्वस्मिन् परमप्रेमरूपा, अमृतस्वरूपा च'।**[3]

अपि च तस्याः विषये कथितं यद् –

**'यल्लब्ध्वा पुमान् सिद्धो भवति अमृतो भवति तृप्तो भवतिं ।'[4]**

**'यत्प्राप्य न किञ्चिद् वाञ्छति न शोचति न द्वेष्टि न रमते नोत्साही भवति ।'[5]**

महर्षिणां शाण्डिल्येन भक्तिः नाम **'सा परानुरक्तिरीश्वरे'**[6] इति कथितम् । सेयं भक्तिः साध्यसाधन भेदेन द्वैताद्वैतभेदेन च द्विधा भवति ।

**'अन्याभिलाषिताशून्य ज्ञानकर्माद्यनावृतम् ।**
**आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ।।'[7]**

**'सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।**
**हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ।।'[8]**

धार्मिकसाहित्ये भक्तेः उदयः वैदिककालादेव दृश्यते। देवतानां रूपदर्शनं, तेषां स्तुतिगानं तेषां साहचर्यार्थमुत्सुकता, ताः प्रति समर्पणे आनन्दानुभवः – इत्यादयः भावाः वेदेषु दृश्यन्ते। ऋग्वेदस्य विष्णुसुक्ते वरुणसुक्ते च भक्तितत्त्वानि प्रचुरतया लभ्यन्ते।

ब्राह्मणसाहित्ये कर्मकाण्डस्य प्रभावेण भक्तिः अभिभूता दृश्यते, किन्तु उपनिषत्सूपासनायाः प्राधान्येन निर्गुणभक्तिः कुत्रचित् प्रतीकोपासना च जागरिता दृश्यते। छान्दोग्योपनिषद्, श्वेताश्वतरोपनिषद, मुण्डकोपनिषदित्यादिषु विष्णुः, शिवः, रुद्रः, अच्युतः, नारायणः, सूर्य इत्यादीनाञ्च भक्त्युपासनयोः संकेताः प्राप्यन्ते।

वैदिकभक्तेः पयस्विनी महाभारतकालपर्यन्तं विस्तृता। वैष्णवभक्तेः भागवद्धारायाः विकासः अस्मिन्नेव काले अभवत्। यादवानां

सात्वतशाखायां प्रवृत्तिप्रधानस्य भागवतधर्मस्य उत्कर्षः अभवत्। भागवतधर्मस्य नवोदितं रूपम् प्रमाणमस्य। रामानुजमध्वादिभिः भागवतधर्मस्य नवीनः विकासः कृतः। अग्रे एकनाथः, रामानन्दः, चैतन्यः, वल्लभाचार्यः इत्यादिभिः भागवतधर्मस्य प्रचारः कृतः। मध्ययुगे सर्वप्रदेशीयसत्पुरुषैः भक्तकविभिः भक्तिप्रचारार्थं प्रभूतं योगदानं कृतम्। तत्र महाराष्ट्रे पञ्चभक्तिसंप्रदायाः अपि उल्लेखनीयाः सन्तिः। ते–

1) नाथसंप्रदायः 2) महानुभावसंप्रदायः 3) वारकरीसंप्रदायः4) दत्तसंप्रदायः

5) समर्थसंप्रदायः इति।

प्रकरणेस्मिन् संस्कृतसम्बद्धसंप्रदायाः एव चर्चिष्यन्ते। तत्र केचन प्रमुखसंप्रदायाः –

1. श्रीसम्प्रदायः – रामानुजाचार्यद्वारा प्रचलितः
2. ब्रह्मसम्प्रदायः – मध्वाचार्यद्वारा प्रचलितः
3. सनकादिकसम्प्रदायः – निम्बार्काचार्यद्वारा स्थापितः

मध्ययुगीनभक्तेरुत्पत्तेः तथा विकासस्य इतिहासः भागवतपुराणमहात्म्ये एवं प्रतिपादितः।

उत्पन्ना द्रविडे साहं वृद्धिं कर्णाटके गता।
क्वचित् क्वचिन् महाराष्ट्रे गुर्जरे जीर्णतां गता।।
तत्र घोरकलेर्योगात् पाखण्डैः खण्डिताङ्गका।
दुर्बलाहं चिरं जाता पुत्राभ्यां सह मन्दताम्।।

**वृन्दावनं पुनः प्राप्य नवीनेव सुरूपिणी।**

**जाताहं युवती सम्यक् प्रेष्ठरूपा तु साम्प्रतम्।।**[9]

वस्तुतः वेदाः भक्तेः आदिस्रोतांसि। वेदेषूपवर्णितभक्तितत्त्वं ज्ञातुं प्रथमं लौकिक –भक्तिस्वरूपज्ञानम् आवश्यकम्। यथा पूर्वं भक्तिस्वरूपमुक्तम् – यद् 'भक्तिः नाम फलाभिसन्धानशून्या सेवा' इति। भक्तिः नाम हृदयस्य सा भावना यस्यां साधकः पूर्णभावेन ब्रह्मणि अनुरक्तः भूत्वा सर्वतोभावेन ब्रह्मार्पणं करोति, ब्रह्मणः सृष्टिं प्रति सेवाभावम् अपि निदधाति। ऋग्वेदे भक्तेः अयमेव भावः दृष्टिगोचरो भवति –

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।**[10]

अर्थात् अहं सर्वभूतान् सख्यभावेन पश्यामि सर्वाणिभूतानि च मां सख्यभावेन पश्यन्तु इति। वैदिकभक्तेः एकं वैशिष्ट्यं वर्तते यद् वेदेषु एकोऽपि तादृशमन्त्रो नोपलभ्यते यस्मिन् साधकः स्वविषये ईश्वरविषये वा अधमः, नीचः, पापी, दुष्टः, खलः, पतितः इति कथयति। अस्य कारणमस्ति यद् वेदेषु भक्तस्य शक्त्या सह नियमितः अविच्छिन्नः च संबंधः मतः। वेदद्वारा प्रभुः एनम् आदेशं ददाति यद् निर्बलः अशक्तः वा. भक्तः भवितुं नार्हति। अतः वेदे भक्तः –

**तेजोऽसि तेजो मयि धेहि, वीर्यमसि वीर्यं मयि।**

**धेहि, बलमसि बलं मयि धेहि, ओजोऽस्योजो**

**मयि धेहि, सहोऽसि सहो मयि धेहि।।**[11]

अर्थात् भक्तः प्रभुं तितिक्षाइत्यादिभिः च परिपूर्णः इति मत्वा तस्मात् तद्गुणान् याचते।

**कृतं मे दक्षिणे हस्ते जयो मे सव्य अहितः।।**[12]

अर्थात् मम दक्षिणहस्ते कार्यशक्तिः वामहस्ते च विजयो वर्तते। किन्तु अस्यायमर्थो न यद् वेदेषु भक्तस्य ब्रह्माणं प्रति प्रणमनभावना नास्ति, अधोलिखितात् मन्त्राद् भक्तः कियत्या तन्मयतया प्रभुचरणे नतमस्तको भवति तज्ज्ञायते–

**यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति।**

**वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः।।**[13]

अर्थात् भूत–भविष्यत्–वर्तमानानां यः अन्तर्यामी प्रभुः, विश्वव्योम्नि व्याप्तः त्रिकालस्य यः स्वामी, यः निर्विकारः आनन्दकन्दः, कैवल्यरूपः सुखधाम, तं जगदीश्वरमहं विनम्रतया वन्दे।'भक्ति' शब्दस्यार्थः परमेश्वरविषयकोऽनुरागः अस्ति। एनमनुरागम् भक्तः श्रवणंकीर्तनंस्मरणंपादसेवनमर्चनंवन्दनं–दास्यंसख्यमात्मनिवेदनमित्यादिभिः विविधैः शारीरिकमानसिक–वाचिकक्रियाभिः अभिव्यनक्ति। अस्याः नवविधभक्तेः वेदेष्वपि नैकस्थलेषु निरूपणं प्राप्यते।

एवं भक्तिसंप्रदायस्य विविधानां मतानां संक्षिप्तसमीक्षणानन्तरं नारायणतीर्थानां जीवनम् कृतीश्चाधिकृत्य द्वितीयाध्याये प्रस्तोष्यते।

————

## संदर्भाः


1. गरुड पुराणम् (अध्याय 231) 3, क.भ.अं. 491
2. भ.च. पृ. 6
3. नारायण भ.सू . 2,3
4. नारायण भ.सू . 4
5. नारायण भ.सू. 5
6. शा.भ.सू. 1.1.2
7. भक्तिरसामृतसिन्धुः पृ.सं.— क.भ.अं. 280
8. क.भ.अं. 279
9. श्रीभाग.— 1.48—50
10. शु.यजु.सं. 36—18
11. क.भ.अं.पृ.सं. 44
12. अथर्व.सं. 7—40—8
13. तत्रैव 10—8—01


————

द्वितीयाध्यायः

# नारायणतीर्थानां जीवनं कृतयश्च

शाण्डिल्यभक्तिसूत्रमधिकृत्य स्वप्नेश्वराचार्याणां भाष्यं विश्रुतमस्ति किन्तु तत्र विद्वद्वरेण्यश्रीनारायणतीर्थैविरचिता भक्तिचन्द्रिकाऽपि स्वमहत्त्वं व्याख्यायन्ती विद्वत्समाजे समादरं लभमाना श्रद्धेया बोभवीति। अस्यां व्याख्यायां तीर्थैरुद्भाविता नैके नवीनाः विषयाः सन्ति, ये चान्यैः पूर्वतनैर्व्याख्याकारै–र्विद्वद्भिरनुद्भाविताः। एतद्व्याख्यया द्वादशदर्शनेष्वपि प्रकाण्डवैदुष्यविभूषितानां श्रीनारायणतीर्थानां सर्वेष्वपि शास्त्रेषु अकुण्ठिता गतिरिति निश्चप्रचं भवति। नारायणतीर्थाः तत्त्वज्ञानस्य सर्वेषाम् आस्तिकदर्शनानामुपरि भाष्यं कृतवन्तः अतः ते 'वाचस्पतिमिश्र' सदृशाः सर्वतन्त्रस्वतन्त्ररूपेण व्यलसन्।[1] ते वैविध्यपूर्णं साहित्यं निर्मितवन्तः अपि च सुप्रसिद्धाः तीर्थसंप्रदायस्य संन्यासिनः आसन्। नारायणतीर्थैः अनेन भाष्येण यः भक्ति–सम्प्रदायस्य प्रचारः कृतः तस्मादपि च ते काश्यां तस्मिन् समये सुप्रसिद्धाः संन्यासिनः आसन्, इत्यतः ते मधुसूदनसरस्वतीप्रभृतिसमानाः आसन् इति विदुषां मतम्। केषाञ्चनपिदुषां तीर्थः सरस्वती, भट्ट, उपाध्याय इत्यादयः उपाधयः विविधशास्त्रपारंगतेभ्यः विद्वद्भ्यः दीयन्ते स्म।[2] तीर्थाः शास्त्रीयचिन्तने सर्वथा सर्वदा च जागरुकाः सन्ति। अन्धश्रद्धापरवशाः सन्तः किमपि कदापि न प्रतिपादयन्ति।[3]

अस्यां व्याख्यायां तीर्थाः मोक्षमार्गेषु भक्तेः उच्चतमस्थानं विशदयामासुः। भक्तावन्तर्गताः प्रेम्णः पञ्चदशप्रकाराः, एकादशभक्तिभूमिकाः, षड्विधकर्मप्रकाराः, अवतारविचारः, उत्क्रान्तिविचारः, कीर्तने

सर्वाधिकारः इत्यादिभिः संवलितेयं व्याख्या विद्यारसिकानां हृदयं हठात्समाकर्षति।

तस्मिन् काले 'नारायणतीर्थ' इत्यनेन नाम्ना बहवः विद्वांसः अभवन्। सर्वेषां विदुषां चिन्तनं, विविधदृष्टिकोणान् च परीक्ष्य श्री नटराजन् महोदयाः अस्मिन् विषये वदन्ति यद् श्रीकृष्णलीलातरङ्गिणीरचयितॄणां नारायणतीर्थानां समयः 1675–1745 ।ण्क्ण्इत्यासीत्।[4] पी.के. गोडे महोदयानां सूचनानुसारं को एन्डो महोदयाः अयं समयः पुनर्ग्राह्यः इति निर्दिशन्ति,[5] यतः पी.के. गोडे महोदयानुसारं श्री शिवरामतीर्थानां शिष्याणां नारायणतीर्थाः नाम् क्रियाशीलसमयः 1650 ।ण्क्ण्इत्यासीत्। नटराजन्महोदयैः निर्दिष्टा–अधोलिखित–कारिका नारायणतीर्थानां समयभिन्नतां एवं दर्शयति।[6]

**'क्रिस्त्वादौ शतषोडशाञ्चितचतुः पञ्चाशताब्दे महान्।**

**श्रीनारायणतीर्थ सद्गुरुवरो जीवत्समाधिं ययौ।।'**

इयं कारिका नारायणतीर्थानाम् कालः 1645 इत्यासीत् इत्येतस्य मतस्य पुष्टिं करोति किन्तु कारिकायाम् अस्याम् कथितसमयः 1654 इत्यस्ति न तु 1645 इति।

## नारायणतीर्थानां जीवनम्

श्रीकृष्णलीलातरङ्गिणीरचयितॄणां नारायणतीर्थानां कालः सप्तदश–अष्टादशशतकयोः मध्यकालः इति मन्यते। ते नीलकंठशास्त्री–पर्वताम्मा इत्येतयोः तल्लावज्झल इत्येतस्मिन् ब्राह्मणकुटुम्बे आन्ध्रप्रदेशे गुन्टुर (नाम जिल्हा) इत्यत्र काझा इत्यस्मिन् ग्रामे जनिमलभन्त। ते बाल्ये गोविन्दशास्त्री इति नाम्ना प्रसिद्धाः आसन्, काञ्चि इत्यत्र सन्यासं प्राप्य

नारायणतीर्थेत्यभिधानेन प्रथिताः। इयं गुरुपरम्परा विद्यारण्य–पाठशालायाः इत्युच्यते। नारायणतीर्थाः विविधप्रदेशुषु पर्यटनं कृतवन्तः। बहूनि स्थानानि दृष्टवन्तः। अन्ते तामिलनाडूमध्ये तिरुप्पुन्टुरुट्टी इत्यत्र समाधिं प्राप्तवन्तः।[7]

**भक्तिचन्द्रिकाकर्तॄणां नारायणतीर्थानां जीवनम्**

प्राप्तज्ञानानुसारं अधोलिखिताः अंशाः वक्तुं शक्यन्ते।

1) भक्तिचन्द्रिकाकर्तारः नारायणतीर्थाः काश्यां न्यवसन्।

2) नारायणतीर्थानां समयः 1600–1690 ।ण्क्ण्इत्यासीत्।

3) तेषां शास्त्रगुरवः वासुदेवपण्डिताः आसन् दीक्षागुरवश्च गोविन्दतीर्थाः आसन्।

4) ते संन्यासिनः पण्डिता भक्ताः चासन्।

5) तैः प्रामुख्येन न्यायसाङ्ख्ययोगोत्तरमीमांसाभक्तीत्येतेषु विषयेषु ग्रन्थाः लिखिताः।

**नारायणतीर्थानां विषयानुसारं कृतयः**

**साङ्ख्यविषये–**

1) साङ्ख्यचन्द्रिका 2) तत्त्वचन्द्रिका

**योगविषये–**

1) योगचन्द्रिका 2) योगसिद्धान्तचन्द्रिका 3) योगसूत्रवृत्तिः

**न्यायविषये–**

1) न्यायचन्द्रिका 2)सत्तर्करत्नाकरः 3) कुसुमाञ्जलिकारिकाव्याख्या

उत्तरमीमांसा विषये –

1) वेदान्तविभावना–टीका 2) गुरुटीका (सिद्धान्तबिन्दूपरि) 3) लघुव्याख्या

**भक्तिविषये**–(शाण्डिल्यभक्तिसूत्रव्याख्याः)

1) भक्तिचन्द्रिका 2) भक्त्यधिकरणमाला 3) भक्तिमीमांसाभाष्यम्

एतेभ्यः ग्रन्थेभ्यः तेषां टीकाकाररूपेण पूर्णशैली दृश्यते।साधारणतः लेखकः एकस्य ग्रन्थस्योपरि एकां टीकां एकं ग्रन्थं वा लिखति किन्तु नारायण तीः यदा व्याख्यां कुर्वन्ति तदा तेषां चिन्तनं भिन्नं भवति। ते ज्ञानार्थिनां कृते एकम् एव विषयं नैकेषु ग्रन्थेषु विवेचयन्ति। तथा भिन्न–भिन्नस्तरीयाः वाचकाः नारायणतीर्थानां ग्रन्थेभ्यः विषयमवगन्तुं शक्नुवन्ति।

इतोऽपि केचन ग्रन्थाः सन्ति ये प्रमाणाभावात् नारायणतीर्थानां कृतित्वेन निश्चेतुं न शक्यन्ते। ते –

1) आत्मबोध इत्यस्य बालबोधिनी व्याख्या

2) तत्त्वचिन्तामणि दिधितीव्याख्या (रघुनाथशिरोमणि इत्येतस्य दिधीती इत्यस्योपरि)।

3) ब्रह्मसूत्राणाम् टीका

4) ब्रह्मसूत्राणाम् वृत्तिः

5) दक्षिणामूर्तिस्तोत्र–व्याख्या

6) वेदस्तुति–व्याख्या

अयं प्रबन्धः भक्तिचन्द्रिकायाः विमर्शनात्मकमध्ययनमस्ति। भक्तिचन्द्रिकेत्येयं भक्तिसूत्राणामुपरि बृहती महत्त्वपूर्णा च व्याख्यास्ति। यद्यपि व्याख्याद्वयमितोऽपि लभ्यते तथापि भक्तिचन्द्रिका इति अस्य प्रबन्धस्य अध्ययन–विषयः। अतः अग्रिमाध्याये भक्तिचन्द्रिकायाः वैशद्येन विवरणं प्रस्तूयते।

————

## संदर्भा :


1) योे.सि.च. 2004 पृ.6

2) बी. नटराजन द्वितीयः अध्यायः पृ.57

3) यो.सि.च. 2000 पृ.6

4) बी. नटराजन् पृ.160

5) को एण्डो पृ.55

6) बी. नटराजन् पृ.167

7) यो.सि.च. 2004 पृ.14


————

## तृतीयाध्यायः

# भक्तिसाहित्यं

### शाण्डिल्यभक्तिसूत्राणां स्वरूपं विषयश्च।

तृतीये प्रकरणेऽस्मिन् समग्रसंस्कृतभक्तिसाहित्यस्यावलोकनं तेषां स्वरूपञ्च विव्रियते। समग्रे संस्कृतसाहित्ये भक्त्युल्लेखाः तु सर्वत्र विकीर्णाः सन्ति किन्तु तत्र भक्तिसाहित्यरूपेण कथ्यमानाः ग्रन्थाः अत्र अध्ययनार्थं सङ्गृहीताः। यथोक्तपूर्वं वेदकालादारभ्यैव भक्तितत्त्वमुद्भूतमिति, अतः वेदाः प्रथमभक्तिसाहित्यत्वेन स्वीक्रियन्ते। तदनन्तरम् उपनिषदाम् अन्तर्भावः क्रियते यतो हि उपनिषत्स्वपि तपःब्रह्मचर्योपासनारूपेण भक्तितत्त्वं सर्वत्र उपदिश्यते। उपनिषदामनन्तरम् आर्षकाव्ये रामायणं महाभारतञ्च अन्तर्भवतः। तयोरनन्तरं पुराणानि तत्पश्चात् नारदभक्तिसूत्रं शाण्डिल्यभक्तिसूत्रं, भक्तिरसामृतसिन्धुः भगवद्भक्तिरसायनं भक्त्यधिकरणमाला, पाञ्चरात्रम्, इत्येतेषां भक्तिग्रन्थानां स्वरूपं विषयश्च चर्चिष्यते।

भक्तिसाहित्यावलोकनादनन्तरं शाण्डिल्यभक्तिसूत्राणां स्वरूपं विषयश्च वैशद्येन स्पष्टीक्रियते।

### शाण्डिल्यभक्तिसूत्रेषु भक्तिः

भक्तिसूत्रप्रणेतृणां शाण्डिल्यानां दिक्कालादयः निश्यचेन वक्तुं न शक्यन्ते। शाण्डिल्याभिधानाः नैके महर्षयो नानाग्रन्थेषूपदिष्टाः। यथा –

1. शतानिका विष्णुमतिः इत्येतयोः पुत्ररूपेण शाण्डिल्यानामुल्लेखो प्राप्यते।

2. युधिष्ठिरस्य न्यायालये सदस्य रूपेण एतेषामुल्लेखः वर्तते।

3. एतेषां कन्यायाः उल्लेखः शल्यपर्वणि प्राप्यते।

4. महाभारते शरशय्याप्रसंगे भीष्मैः सह तेषामुल्लेखः अस्ति।

5. अनुशासनपर्वणि सुमन्युनाम्ना राज्ञा तेभ्यः विपुलं धनं दत्तमिति वर्णितमस्ति।

6. बृहदारण्योकोपनिषदि षष्ठतः दशमकाण्डपर्यन्तं शाण्डिल्यानाम् अनुसारं वेदीविचारः कृतो दृश्यते।

7. वृद्धहारीतस्मृतौ अवैदिकविष्णुपूजा इत्यस्मिन् विषये ग्रन्थरचयितृरूपेण महर्षिरूपेण च उल्लेखः अस्ति।[1]

एवञ्च एतेषु भक्तिसूत्रप्रणेतारः शाण्डिल्याः के केन च साकम् ऐक्यं वा भजन्त इति न निश्चीयते। तथापि भक्तिसूत्रप्रणेतारः शाण्डिल्याः पाञ्चरात्रानुयायिन इति पाञ्चरात्राध्ययनाद् ध्रुवं निर्णेतुं शक्यते। 'वैषम्यादसिद्धम्', 'न च क्लिष्टः परं स्यादनन्तरं विशेषात्' इति सूत्रद्वयम् अन्यथा योजयन्ति श्रीरामानुजाचार्याः इति भक्तिचन्द्रिकायां प्राप्तोल्लेखेन श्रीरामानुजाचार्याः शाण्डिल्यभक्तिसूत्राणां कमपि व्याख्याग्रन्थमरीरचन्निति स्पष्टं प्रतीयते। तेन द्वादशशतकस्थाद् श्रीरामानुजाचार्यात् शाण्डिल्यमहर्षीणां प्राचीनत्वं स्फुटमवगम्यते। श्रीमद्भगवद्गीतायाः स्पष्टोल्लेखेन श्रीभागवतस्य च अस्फुटोल्लेखेनः एतेभ्यां ग्रन्थाभ्यां शाण्डिल्यानाम् अर्वाचीनत्वं प्रकटी भवति।

इत्थं शाण्डिल्यानां समयः पञ्चमद्वादशशतकयोर्मध्यभागः इति स्वीकर्तुं शक्यः। एतेषां नाम्ना शाण्डिल्यस्मृतिः, शाण्डिल्यधर्मसूत्रम्, शाण्डिल्यतत्त्वदीपिका, शाण्डिल्यभक्तिसूत्रम्, इत्येते ग्रन्थाः सन्ति।

शाण्डिल्यमहर्षयः शताधिकभक्तिसूत्राणि अरीरचन्। एषु सूत्रेषु भक्तेः लक्षणं प्रकाराः इतरमोक्षसाधनेभ्यः मुख्यत्त्वं भक्तावधिकारी भक्त्यनुष्ठानं भक्तप्रकाराश्च इत्यादीनां विषयाणां ज्ञानं सुगठितं विद्यते।

### शाण्डिल्यभक्तिसूत्राणि –तेषां स्वरूपं विषयश्च

शाण्डिल्यभक्तिसूत्राणि त्रिष्वध्यायेषु विभक्तानि सन्ति। त्रिष्वध्यायेषु प्रत्येकस्मिन् आह्निकद्वयं वर्तते इति उक्तपूर्वम्। अधुना प्रत्येकस्मिन् अध्याये वर्णितविषयाणां वैशद्येन विवरणं क्रियते।

### प्रथमाध्यायस्य प्रथमाह्निकम्

भक्तिग्रन्थस्यास्य प्रयोजनं दर्शयता '**अथातो भक्तिजिज्ञासा**'[2]इत्यनेन सूत्रेण आह्निकस्य अस्य आरम्भः भवति। आह्निकेऽस्मिन् महर्षिभिः शाण्डिल्यैः भक्तेः लक्षणमुक्तम् '**सा पराऽनुरक्तिरीश्वरे**'[3]इत्यनेन सूत्रेण। तेषामनुसारम् ईश्वरे परानुरक्त्या निष्ठ्या च भगवदनुग्रहद्वारा अविद्यानाशः सम्भवति तेन च अमृतत्वप्राप्तिर्भवति। अतः '**तत्संस्थस्यामृतत्त्वोपदेशात्**'[4]इति सूत्रितम् महर्षिभिः। एतद् सूत्रं ब्रह्मसंस्था–शब्देन ब्रह्मज्ञानमेव सूचयति इति केषाञ्चन मतं भवितुमर्हति। अतः ब्रह्मज्ञानमिति अर्थः न ग्रहणीयः इति स्पष्टीकर्तुं '**ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः**'[5]इति महर्षिभिः प्रोक्तम्। तेषामभिप्राये संस्थाभक्तिरेव न ज्ञानम्, द्विषतः तज्ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात्। राजादिष्वनुरक्ताः ये अमात्याः ते तत्संस्था इति उच्यन्ते न तु प्रतिपक्षभूपालाः अतः तत्संस्थस्य इत्यत्र तन्निष्ठस्य इत्येव अर्थः ग्रहणीयः इत्येतस्मात् सूत्राज्ज्ञायते।

एवं प्राप्ते सति अनया भक्त्या मुक्तिं प्रति ज्ञानस्य हेतुत्वं निराक्रियत इति वदन्ति '**तयोपक्षयाच्च**'[6]इत्यनेन। शाण्डिल्यमहर्षीणां मोक्षप्राप्तौ भक्ति एव

उपकारिणी न तु ज्ञानम् इत्ययं विचारः सिद्धान्तरूपेण सम्पूर्णग्रन्थे दृश्यते। शाण्डिल्यमहर्षीणां भक्तेः स्वरूपं विवेचयन्तमिदं सूत्रमस्ति इति भाति –

'**द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः**'।[7]सा भक्तिः रागरूपा अस्तीति कथने हेतुद्वयमुपस्थापयन्ति शाण्डिल्य महर्षयः, 1) द्वेषप्रतिपक्षभावात् 2) रसशब्दात् चेति। लोके द्वेषविरोधी राग एव प्रसिद्धमस्ति अपि च द्वेष्टाऽयं भक्तोऽयमिति एतादृशव्यवहारोऽपि सुज्ञातमेव इति प्रथमहेतुना द्वितीयेन च भागवतस्य प्रथमस्कन्धे 'मुहुरहो रसिका भुवि भावुकाः' इत्येतस्मात् कथनात् भक्तौ रसशब्दात् भक्तिः रागरूपेति स्पष्टं भवति। एषा रागरूपा भक्तिः क्रियात्मिका नास्ति इति स्पष्टयितुं ज्ञानवद् इति हेतुं प्रदर्शयति एतद् सूत्रं –'**न क्रिया कृत्यनपेक्षणाज्ज्ञानवत्**'[8]इति। तेषामनुसारं भक्तिः भगवद्गुणादि– ज्ञानादिमात्रसाध्या अस्ति अतः तस्यां पुंप्रयत्नानामावश्यकता न भवति यथा ज्ञानं कृतिसाध्यं न, तथैव भक्तिरपि कृतिसाध्या न भवतीति तैः अभिहितम्/अभिप्रेतमिति भाति। तेषां मते भक्तिः क्रियात्मिका ज्ञानात्मिका वा नास्ति। क्रियात्मकत्वे तस्याः स्वर्गादिमात्रफलकत्वं भवेद्, ज्ञानात्मिकत्वे वा मोक्षमात्रफलकत्वं भवेद् किन्तु तस्याः फलानाम् आनन्त्यं दृश्यते अत एव सा क्रियात्मिकाज्ञानात्मिका वा केवलं न भवतीति महर्षिभिः प्रतिपादितम् इति '**अत एव च फलाऽऽनन्त्यम्**'[9]इत्यनेन सूत्रेण ज्ञायते।

भक्तेः रागरूपत्वकथनेन ज्ञानाद् भिन्नता स्पष्टीभवति तथापि ज्ञानादपेक्षया प्रामुख्यं कथयितुं –'**तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपतिवत्**'[10]इति सूत्रितम्। अर्थात् भक्तिर्मुख्या न ज्ञानम् एतत् स्पष्टीकर्तुं 'प्रपत्तिशब्दाच्च' इति हेतुः उक्तः। हेतावस्मिन् 'च' इत्यनेन

पूर्वसूत्रं गृह्यते इति भाति। अर्थात् भक्तेः अनन्यफलत्वात् प्रपत्तिशब्दाच्च सा ज्ञानादपेक्षया मुख्या अस्तीति महर्षिणामभिप्रायः भवेद्। **'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'**[11]इत्यनेन भगवद्वचनेन भक्तेः ज्ञानानन्तर्यं सूच्यते तस्माच्च ज्ञानेन भगवच्छरणागतिः तया च मोक्षः इति अर्थे ज्ञानापेक्षया भक्तेर्मुख्यत्वमेवास्ति इति महर्षिणामभिप्रायः उपर्युक्तसूत्राद् प्रकटीभवति।

एवमस्मिन्नाह्निके भक्तेर्लक्षणं फलं तस्याः क्रियात्वनिराकरणं ज्ञानाद् मुख्यत्वञ्च महर्षिभिः विवृतम्।

**प्रथमाध्याये द्वितीयाह्निकम्**

आह्निकेऽस्मिन् भक्तेर्द्वैविध्यं विवृण्वन्ति महर्षयः। तैः भक्तिर्द्विविधा गौणी मुख्या चेति मता। गौणभक्तिरेव साधनभक्तिरित्युच्यते मुख्या च साध्यभक्तिरित्युच्यते। ज्ञानं योगश्च भक्तेः अङ्गे स्तः इति शाण्डिल्यमहर्षिभिः मतः। एतयोरपेक्षया भक्तेः प्रामुख्यत्वज्ञापनाय तैः

**'सा मुख्येतराऽपेक्षि–तत्वात्'**[12]इति सूत्रितम्। भक्तेः मुख्यत्वं ज्ञापयितुम् इतरापेक्षितत्वात् इति हेतुः प्रोक्तः। इतरैः आत्मज्ञानयोगगौणभक्तिभिः स्वोपकार्यतया सा मुख्या भक्तिः अपेक्ष्यते अतः सा मुख्या इति शाण्डिल्यमहर्षिभिः मतमिति ज्ञायते। अस्मिन्विषये छान्दोग्ये **'यो वै भूमा तत्सुखम्'।**[13]इत्याद्युपक्रम्य आत्मैवेदं सर्वमिति ——— आत्मानन्दः स स्वराङ् भवतिं इत्युल्लेखेन यः आत्मरतः स एवं पश्यन्निति अन्वयः भवितुमर्हति इति एनामाशङ्कां विचिन्त्य मर्हिषिभिः **'प्रकरणात्'**[14]इति सूत्रं रचितम्। महर्षिणां मते प्रकरणं रतेरेव भवति। रतित एव लोके आनन्दः दृश्यते। अतः पश्यन्निति यदुक्तं तत्

दर्शनोत्तरभाविन्याः रतेरेव इति मत्वा तयैव स्वाराज्यफलं प्राप्यते इति महर्षिभिः अभिप्रेतमिति दृश्यते।

अस्मिन् पुनः दर्शनफलमिति स्वीक्रियते चेत् इत्येतादृशीम् आशङ्कां विचिन्त्य दूषयन्त्याचार्याः यद् साक्षात्काररूपदर्शनस्यैव स्वाराज्यं फलं स्वीकर्तुमशक्यम्। यतः 'स स्वराड्' इत्यत्र 'स' शब्देन सन्निकृष्ट आत्मरतिरेव स्वीक्रियते न तु विप्रकृष्ट पश्यन्निति, अतः रतिरूपायाः भक्तेरेव स्वाराज्यं फलं भवति।

एवं स्पष्टीकृत्य पुनः ज्ञानस्य भक्तेरङ्गत्वज्ञापनाय आचार्यैः '**दृष्टत्वाच्च**'[15] इतीदं सूत्रं रचितमिति भाति। तेषामनुसारं ज्ञानादिकं भक्तेः फलार्थमुपकारकं न भवति भक्त्युत्पादनपर्यन्तमेव तेषामुपयोगः अस्ति। यतोहि भक्तिः सर्वनिरपेक्षानन्तफला अस्ति अत एव भगवद्विषयकप्रेममात्रतः गोपीप्रभृतीनां तत्प्राप्तिरूपा मुक्तिः प्राप्यते इति। महर्षिणां मते ज्ञानं भक्तेः अङ्गमेवास्ति अतः तयोर्विकल्पः न सम्भवति। इदृशीयं भक्तिः श्रुतिभ्यः प्रमेया वर्तते इत्यत्र तेषां दृष्ट्या शङ्कालेशोऽपि नास्ति। भक्तिं प्रमाणयितुं तैः '**पृथुध्रुवप्रह्लादाम्बरीषशुकसनकनारद–भजनाचाराच्च**'[16]इत्यस्मिन् सूत्रे पृथ्वादीनामुदाहरणैः भक्तिः प्रमाणीकृता। तेषामनुसारं पृथ्वादिभिः भगवन्तं शरणं गत्वैव मुक्तिः प्राप्ता अतः भक्तिरेव मुक्तिकारिणी इत्यत्र एते प्रमाणाः सन्ति।

ज्ञानस्य भक्तेः अङ्गत्वं विज्ञाप्य योगः ज्ञानस्य अङ्गमस्तीति महर्षिभिः मतम् इति दृश्यते। महर्षिणां मते संसारोद्धारकपरमेश्वरविषयत्वात् भक्तिः उत्तमा अस्ति अतः यथा दुःसङ्गः हेयः न तु सत्सङ्गः तथैव संसारानुगुणः रागः हेयः न तु संसारोद्धारकपरमेश्वरविषयकरागः इति तैः मतम्।

इत्यतः आह्निकेऽस्मिन् भक्तेः मुख्यत्वज्ञापनं ज्ञानयोगस्य च भक्तेः अङ्गत्वज्ञापनमिति प्रमुखौ विषयौ इति ज्ञायते।[17]

### द्वितीयाध्यायस्य प्रथमाह्निकम्

प्रथमाध्याये भक्तेर्लक्षणं, भेदौ, तदङ्गानि तस्याः मुख्यत्वञ्च विज्ञाप्य द्वितीयाध्यायस्य प्रथमाह्निकेऽस्मिन् भक्तिपरिशुद्ध्यर्थं किं करणीयम्, भगवत्स्वरूपं, प्रकृति–ब्रह्मस्वरूपं/सम्बन्धः, भक्तिपरिशुद्धिज्ञाप–कलिङ्गानि, देहपरिग्रहः तत्कारणं, राजादिविभूतिषु भक्तेर्फलविषयकी च चर्चा दृश्यते। शाण्डिल्यमहर्षिणां मते ब्रह्मप्रतिपत्तिहेतूनां श्रवणमनननिदिध्यासनानां भक्तिपरिशुद्धिपर्यन्तमसकृदावृत्तिः करणीया तथैव ज्ञानाद्यङ्गानामपि शान्तदान्तादीनामसकृदावृत्तिः करणीया इति '**बुद्धिहेतुप्रवृत्तिराविशुद्धेरवघातवत्**',[18] '**तदङ्गानाञ्च**'[19]इत्येताभ्यां सूत्राभ्यां ज्ञायते।

आह्निकेऽस्मिन् महर्षिभिः काश्यपाचार्याणां बादराणाचार्याणाञ्च ब्रह्मप्रतिपत्तिविषयकं मतमुल्लिखितम् –'**तामैश्वर्यपरां काश्यपः परत्वात्**',[20] '**आत्मैकपरां बादरायणः**'[21]इत्येताभ्यां सूत्राभ्याम्। अर्थात् ब्रह्मप्रतिपत्तिं परमैश्वर्यादिमद्विषयिणीं निःश्रेयसफलां काश्यपाऽऽचार्यो मन्यते, तेषां मते 'द्वासुपर्णा' इत्यादिश्रुतिमूलको जीवब्रह्मणोरत्यन्तं भेद एवास्ति। बादरायणाचार्याणां मते सा बुद्धिः अखण्डार्थविषयिणी अस्ति। एतेषां मते 'द्वा सुपर्णा' इति श्रुत्या अनूदितस्य मिथ्यात्वाद् अखण्डार्थस्यैव मोक्षफलत्वं ज्ञाप्यते इति।

अग्रिमसूत्रे शाण्डिल्याचार्याः स्वमतमुपस्थापयन्ति –'**उभयपदां शाण्डिल्यः शब्दोपपत्तिभ्याम्**'[22]इति। अर्थात् काश्यपमतस्य दासोऽहमिति बुद्धौ पर्यवसानाद् बादरायणमतस्य सोऽहमिति बुद्धौ पर्यवसानात्,

बुद्धिद्वयस्यापि फलतो भ्रमविरोधिविषयकत्वेन स्वानर्थोच्छेदक्षमत्त्वात् प्रामाण्यमेवेति यथाऽधिकारं द्वयमपि युक्तमेवेति अतः उदाहृतभेदाभेदश्रुतिभिः ब्रह्मप्रतिपत्तिः भेदविषयाभेदविषयाच अस्तीति।

शाण्डिल्याचार्यैः भक्तिविषयमग्रे नेतुं पुनः सूत्रम् उपस्थाप्यते '**तत्परिशुद्धिस्तु गम्या लोकवल्लिङ्गेभ्यः**'[23]इति अर्थात् भक्तिः परिशुद्धा इति ज्ञातुं किं लिङ्गमिति पृष्टे सति यावद् '**न चलति भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि स वैष्णवाग्रज**'[24]इति अत्र उक्तलिङ्गेभ्यः भक्तिपरिशुद्धिः गम्या अपि च **सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थान–तदीयतासर्वतद्भावाप्रातिकूल्यादिभ्यः**[25] अपि भक्ति–परिशुद्धिः अवगन्तव्या इति तैरुक्तम्। भक्तेः मुख्यत्वं ज्ञापयितुमस्मिन् आह्निकेऽपि सूत्रमेकं आयाति –'**जन्मकर्मविदश्चाजन्मने शब्दात्**'[26]अर्थात् भगवतः अवतारभावः जन्म, दैत्यवधभक्तोद्धारादिकं कर्म इत्येतयोः ज्ञानेन, मनोमालिन्यनिरासोल्लासद्वारा भक्तिर्भवति तया च जन्माभावफलं प्राप्यते इत्युक्तम्, एतद् प्रमाणीकर्तुञ्च –

**'जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।**

**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन'।।**[27]

इति भगवद्वाक्यमुदाहृत्य जन्मकर्मवेदनस्य साक्षादमृतफलत्वाभावात् भक्तिद्वारैव कारणतां सिद्धीकर्तुमिच्छन्तीति भाति। एतस्मादनन्तरम् अवतारविषयः चर्चितः '**तच्च दिव्यं स्वशक्तिमात्रोद्भवात्**'[28] '**मुख्यं हि तस्य कारुण्यम्**'[29]इत्येतयोः सूत्रयोः। कूटस्थानन्दसच्चिन्मात्रः परमात्मा स्वमायया स्वप्रकाशसच्चिदानन्दमाययात्मनः शरीरं बाल्याद्यवस्थाभिः

क्रीडनकं सृजतीति स्पष्टीकृत्य आप्तकामस्य भगवतः कारुण्यवशाद् शरीरपरिग्रहादिः प्रोक्तः।

अस्य अवतारस्य प्रकाराः–




इत्थं प्रोक्ताः।

आह्निकेऽस्मिन् केषु भक्तिर्मुक्तिफला केषु च नेति विषयोऽपि महर्षिभिः चर्चितः। तेषां मते **'नराणाञ्च नराधिपं'** इत्यनेन कथनेन विभूतीनां भगवद्रूपत्वकथनाद्राजादिभक्तेरपि मुक्तिफलत्वं न चिन्तनीयम् –**'प्राणित्वान्न विभूतिषु'**[30]इति। **'नराणाञ्च नराधिपः'** इत्यादिकं तु नेश्वरकोटिस्थत्वाभिप्रायेण किन्तु भगवदानुगृहीतः तदभिमान–त्वाभिप्रायेण तस्मात् तद्भक्तिर्न मुक्तिफलेति भावः। किन्तु केषाञ्चन मनसि, वासुदेवः मनुष्यदेहपरिग्रहेण मनुष्यत्वेनोपलभ्यमानात् तस्मिन्नपि भक्तिः मुक्तिफला न भवतिं इतीयं शङ्कोत्पद्यते चेद् तां शङ्कां समादधानाः सूत्रकाराः 'आकारमात्रत्वात्'[31] इतीदं हेतुं दर्शयन्ति। तेषामनुसारं मनुष्याकारत्वेऽपि वासुदेवे जीवत्वं नास्त्येव तदाकारवत्त्वमात्रस्य जीवत्वलिङ्गत्वेऽनुकूलतर्काभावात्।

एवं राजादिविभूतिषु भक्तिः मुक्तिफला न भवति किन्तु अवतारत्वेन सर्वसम्मतेषु रामनृसिंहादिषु परब्रह्मत्वं विज्ञाय तेषु भक्ति; मुक्तिफला अस्तीति सूत्रकारैः प्रतिपादितम्।

एवमस्मिन्नाह्निके भकतेरङ्गानि, लिङ्गानि, तस्याः मुख्यत्वम्, केषु भक्तिः मुक्तिफला, केषुच न प्रकृति–ब्रह्मणोः विचारः, शरीरपरिग्रहकथनम्, अवतारविवेचनञ्चेते विषयाः चर्चिताः दृश्यन्ते।

## द्वितीयाध्यायस्य द्वितीयाह्निकम्

आह्निकेऽस्मिन् गौणभक्तेः विचारः प्रामुख्येन दृश्यते। भजनश्रवणकीर्तनादयः गौणभक्तयः कथ्यन्ते। ताभिः पराभक्तिप्राप्तिर्भवतीति प्रथमसूत्रे दृश्यते –**'भक्त्या भजनोपसंहाराद् गौण्या परायै तद्धेतुत्वात्'**[32] इति। एतासां कीर्तनादीनां गौणभक्तानां भगवद्भक्तिः एव परमप्रयोजनम् अस्ति। एताभ्यः गौणभक्तिभ्यः आरम्भसमारभ्यैव पापक्षयः भवतीति सूत्रकारैः – **'ताभ्यः पावित्र्यमुपक्रमात्।'**[33] इत्यनेन सूत्रेण स्पष्टीकृतम्। **'सा पराऽनुरक्तिरीश्वरे'**[34] इत्येवं पराऽनुरक्तिमेव भक्तिं मन्यमानाः शाण्डिल्यमहर्षयः कीर्तनादयः अनुरागाङ्गतया कर्तव्यमिति मन्यन्ते। अनुरागाङ्गतया कृतं कीर्तनमपि कैवल्यफलं प्रापयति इति प्रतिपादयितुमेव **'तासु प्रधानयोगात्फलाधिक्यम्'**[35] इति तैः सूत्रितम्।

कीर्तनादीनां प्रायश्चित्तरूपेण कथनात् बहुवित्तव्ययायाससाध्यानां कर्मणामननुष्ठानापत्तिरापद्येत इति चिन्त्यते चेत् सूत्रकारैः इत्थं समाहितं यद् –

'**भूयसामनुष्ठितिरिति चेदाप्रायणमुपसंहारान्महत्स्वपि**'[36]अनेन कथनेन च स्मृतिकीर्तनादेः आमरणं कर्तव्यतया उक्तत्वात् महत्स्वपि पापेषु प्रायश्चित्ताभावः भवेदिति कथितम्।

एवमीदृशभक्तेः अधिकारी कः अस्मिन्विषयेऽपि चर्चा अत्र कृता दृश्यते –'**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्**'[37]इत्यनेन सूत्रेण निन्दितचाण्डालयोनिपर्यन्तो सर्वोऽपि जन्तु भक्तावधिक्रियते इति सूत्रकारैः मतम्।

'**महापातकिनान्त्वार्तौ**'[38]इत्येतस्मात्सूत्राज्ज्ञायते। अन्ते च सर्वेषां ज्ञानान्तानां धर्माणां परमेश्वरे परानुरक्तिमुत्पाद्यैव श्रेष्ठ्मस्तीति सूत्रकारैः मतम्।

एवमस्मिन्नध्याये गौणभक्तिविवेचने तस्याः बहिःस्थत्वं, स्वतन्त्रफलविषयत्वं, पूजाविषयं, दिव्यगतिप्राप्तिविषयञ्च विविच्य अन्ते गौणभक्तेः पराभक्तौ पर्यवसानमुक्त्वा तया च मुक्तिरिति सूत्रकारैः प्रतिपादितम्।

## तृतीयाध्याये प्रथमाह्निकम्

तृतीयाध्यायस्य प्रथमाह्निके भजनीयस्य परमेश्वरस्य पूर्णत्वं समर्थितम्।

'**भजनीयेनाद्वितीयमिदं, कृत्स्नस्य तत्स्वरूपत्वात्**'[39]इत्यनेन सूत्रेण सर्वेषामेव पदार्थानां ब्रह्मणः उत्पत्तिः तस्मिन्नेव लयः इति प्रतिपाद्य '**सर्वं खल्विदं ब्रह्मतज्जलान्**'[40]इत्यनया श्रुत्या भजनीयाद्पृथक् किमपि नास्तीति अस्माद् सूत्रात् ज्ञापयितुमिच्छन्त्याचार्याः।

यत्किमपि भासमानं जगत् तदखिलं परमेश्वरशक्तिकृतं वर्तते। परमेश्वरस्य सा शक्तिः अनिर्वाच्यस्वरूपा अस्ति सैव मायाप्रकृतिरिति

चोच्यते। तस्याः सर्वकारणत्वं '**तच्छक्तिर्माया जऽसामान्यात्**'[41] इत्यस्मिन् सूत्रे विवृतम्। '**देवात्मशक्तिस्र्वगुणैर्निगूढाम्**'[42] इत्यादिश्रुतेः, '**दैवी ह्येषा गुणमयी मम माया दुरत्यया**'[43] इत्यनेन भगवद्वचनेन च भगवतः शक्तिर्माया सर्वस्य कारणमस्तीति प्रतिपादितम्। एषा माया वियदादीनामपेक्षयाऽपि व्यापिका अस्ति, ब्रह्मणः सर्वव्यापकत्वमनयैव शक्यत अतः तस्य शक्तिरूपेण अत्रोल्लेखः दृश्यते। अग्रिमे सूत्रे परमात्मनः शक्तिरेव कारणं न अपि तु स परमात्मा शक्तिमत्त्वेन स्वयमेव सर्वं करोतीति वर्णितम् –'**निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत्**'[44]इत्यस्मिन् सूत्रे। तत्रोक्तम् परमेश्वरः न्यूनाधिकं दृश्यजातं विरच्य वेदांश्च रचयति। अर्थात् यथा पिता पुत्रानुत्पाद्य हिताहितप्राप्तिपरिहारवाक्यमभिधत्ते तद्वद् परमेश्वरः प्राणिहितकाम्यया नूनाधिकं निर्माय वेदांश्च निर्मिमीतेत्युक्तम्।

वेदेषु हिंसाविषयावलोकनेन हिंसादिमिश्रितम् उपदेशं कुर्वन् भगवान् न हितेति चिन्त्यमानान् प्रति सूत्रकाराः वदन्ति मिश्रोपदेशेन परमात्मनः हितकारित्वं न विरूध्यते यतः वेदेषूक्तायाः यागाङ्गभूतायाः हिंसायाः स्वल्पफलत्वाद्, प्रधानयागस्य च शुभफलत्वात् परमेश्वरः हितकारी एव।अस्य परमेश्वरस्य रोषतोषावेव फलप्राप्त्यर्थं कारणमिति बादरायणमतमत्र सूत्रकारैः उद्धृतम्।आह्निकान्ते च अस्माद् परमेश्वरादुत्पन्नस्य कुत्र कथं वा लयः तदुच्यते '**व्युत्क्रमादप्ययस्तथा हि दृष्टम्**'[45]इति। अर्थात् व्याप्यस्य पृथिव्यादेर्व्यापके जलादौ लय इति क्रमेण जीवतत्त्वानां लयः भवति, कारणे कार्यस्य लयः भवतीति कथयता '**विपर्ययेण क्रमोऽत उपपद्यते च**'[46] इत्यनेन वेदान्तसूत्रेण अवसेयः इति। एतावन्तः विषयाः अस्मिन्नाह्निके वर्ण्यन्ते।

## तृतीयाध्याये द्वितीयाह्निकम्

भगवतः ऐक्यं दृढीकर्तुं तृतीयाध्यायस्य द्वितीयाह्निके आदावेव सूत्रकृद्भिः स्पष्टीकृतः यद् –'**तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत्**'[47] इति सूत्रकृन्मते यन्नानात्वं दृश्यते तद् उपाधिवशाद् भासते, तन्नाशे एकत्वमेवास्ति, यथादित्यस्य प्रकाशात्मनः प्रतिबिम्बोपाधिदर्पणाद्यपगमे तद्वत्।

एकत्वं प्रतिपाद्य, 'द्वा सुपर्णा' इत्यनया श्रुत्या परमेश्वरस्य जीवात् भेद एवास्ति इति आशङ्कां निराकर्तुं सूत्रकाराः भेदोपपादकपारमार्थिक–सम्बन्धाभावात् ब्रह्म जीवेभ्यः पृथक् नास्ति इति सिद्धीकुर्वन्ति। अत्र जीवाः ज्ञानसुखदुःखादिविकारवन्तः सन्ति अतः अविकारिणा ब्रह्मणा सह तेषामभेदः कथं भवितुं शक्यते इति आशङ्का मा भूदिति कारणेन '**न विकारिणस्तु करणविकारात्**'इति सूत्रकृभिः लिखितम्। एतद् करणविकारादिति हेतुना स्पष्टीकुर्वन्ति यद् जीवानामन्तःकरणसम्बन्धादेव सुखादिकं भवति। सत्वादिविकारत्वे अन्तःकरणमपि विकारि न भवति तत्तु अन्तःकरणस्य विकाराः तथैव जीवेषु दृश्यमानं सुखदुःखादित्वं तस्मिन् विद्यमानान्तःकरणवशादेव न तु ते गुणा जीवे लिप्यन्ते अतः जीवब्रह्मणोः अभेदः भवितुमर्हति।

एवमुक्त्वा सूत्रकारैः अग्रे अभिहितं यद् केवलनिष्कामब्रह्मभक्त्या जीवस्य अन्तःकरणस्यात्यन्तं लयाद् ब्रह्मानन्दावाप्तिरूपमुक्तिर्शक्यत इति। एवं परभक्तौ सत्यामपि जीवनादृष्टं मुक्तिप्रतिबन्धकं भवतीति सूत्रकृतास्वमतमुपस्थापितम्।

––––

## संदर्भाः

1. च्नतंदपब म्दबलसवचंमकपं च्683एभारतीय संस्कृतिकोश खण्डः–9, पृ. 233

2. शा.भ.सू. 1.1.1

3. तत्रैव 1.1.2

4. तत्रैव 1.1.3

5. तत्रैव 1.1.4

6. तत्रैव 1.1.5

7. तत्रैव 1.1.6

8. तत्रैव 1.1.7

9. तत्रैव 1.1.8

10. तत्रैव 1.1.9

11. भ.च.पृ.57

12. शा.भ.सू. 1.2.1

13. भ.च.पृ.59

14. तत्रैव 1.2.1

15. तत्रैव 1.2.1

16. तत्रैव 1.2.1

17. 1) तत्रैव 1.2.1
 2) तत्रैव 1.2.2  3) तत्रैव 1.2.3  4) तत्रैव 1.2.4  5) तत्रैव 1.2.15
 6) तत्रैव 1.2.16

18. तत्रैव 2.1.1

19. तत्रैव 2.1.2

20. तत्रैव 2.1.3

21. तत्रैव 2.1.4

22. तत्रैव 2.1.5

23. शा.भ.सू. 2—1—17

24 भ.च.पृ. 98

25. शा.भ.सू. 2—1—18

26. तत्रैव 2—1—21

27. भ.च.पृ. 102

28. शा.भ.सू. 2—1—22

29. तत्रैव 2—1—23

30. तत्रैव 2—1—24

31. भ.च.पृ. 107

32. शा.भ.सू. 2—2—1

33. तत्रैव 2—2—4

34. तत्रैव 1—1—2

35. तत्रैव 2—2—5

36. तत्रैव 2—2—20

37. तत्रैव 2—2—23

38. तत्रैव 2—2—27

39. तत्रैव 3—1—1

40. तत्रैव 192

41. शा.भ.सू. 3—1—2

42. भ.च.पृ. 193

43. तत्रैव

44. शा.भ.सू. 3—1—5

45. तत्रैव 3—1—8

46. भ.च.पृ. 201

47. शा.भ.सू. 3—2—1

48. तत्रैव 3—2—3

————

चतुर्थोऽध्यायः

# नारायणतीर्थानां भक्तिचन्द्रिकायाः प्रधानविषयाः

अधुना चतुर्थाध्यायेऽस्मिन् नारायणतीर्थानां भक्तिचन्द्रिकाख्यस्य व्याख्यानस्य विषयविवेचनं क्रियते। भक्तिः, ज्ञानम्, अद्वैतं, भक्तेः पुरुषार्थत्त्वम् इत्यादयो विषयाः अध्यायेऽस्मिन् विविच्यन्ते।

## भक्तिलक्षणम्

'**सा परानुरक्तिरीश्वरे**'[1] इति सूत्रे शाण्डिल्यमहर्षिणा भक्तिलक्षणं कृतमस्ति। '**सा त्वस्मिन् परमप्रेमरूपेति**'[2] नारदभक्तिसूत्रमपि एतदर्थकमेव। उभयत्रापि परमेश्वरे परमप्रेमरूपा परानुरक्तिरेव भक्तिरिति लक्षणमवसीयते। अत्र भज् धातोः निष्पन्नस्य भक्तिशब्दस्य कोऽवार्थः इति निश्चेतुम् अवतरणिकामुखेन नारायणतीर्थाः स्वविचारमेवं प्राचीकटन्। भक्तिर्भजनं तच्च भज्सेवायामिति धात्वनुसारात् परमेश्वरसेवारूपं परन्तु न सेवामात्रं यतः राजसेवाकर्मणि समानेकृतेऽपि कस्मिंश्चिदेव भक्त इति अपरस्मिंश्च अभक्त इति व्यपदेशो दृश्यते अतः भक्तिशब्दस्य सेवामात्रमिति नार्थः। तथैव 'अयं मम आराध्यः' इति ज्ञानमपि भक्तिशब्दस्य अर्थो न भवति। यतः भयबलादिनापि तादृशज्ञानेन तादृशव्यवहारो भवितुमर्हति। एवञ्च श्रवणादयोऽपि भक्तिशब्दस्य नार्थः यतस्तत्र भज् धातोः शक्तिर्न विद्यते इत्येवं भक्तिशब्दस्य विविधेष्वार्थेषु अस्वारस्यं दर्शयित्वा नारायणतीर्थाः सूत्रानुगतं भक्तिलक्षणम् एवं विवव्रुः———**भक्तिः परमेश्वरस्य भजनं तत् इहामुत्र–उपाधि–नैराष्येन– अमुष्मिन् मनः कल्पनम् एतदेव च नैष्कर्म्यम् इति श्रुतिस्मृतिवचनानुसारात् भक्तिर्भावविशेषः इत्येव भक्तिलक्षणं सुवचनम्।**[3]

इयञ्च भक्तिः परमेश्वरे अनुरागरूपा। अत्र रागरूपा इत्यनुक्त्वा अनुरागरूपेतिकथनेन 'अनु' – उपसर्गस्य लक्षणे अन्तर्भावोऽस्ति वेति शङ्का भवति एतां शङ्कां समाधातुं नारायणतीर्थैः व्याख्यातं यत् या परमेश्वरे रक्तिः भवति सा परमेश्वरमहिमादिज्ञानात् अनन्तरं भवतीति कारणेन सा रक्तिरेव अनुरक्तिरित्युच्यते इत्युक्तम्। सा अनुरक्तिः फलाभिसन्धानशून्या पूमर्थरूपा सिद्ध्यति सेऽयमनुरक्तिः प्रीतिरूपा भक्तिरेव। इयमेव निरतिशयप्रेमरूपेति भक्तिसंप्रदायः।[4]

## भक्तेर्द्वैविध्यम्

सेयं भक्तिः गौणी मुख्या च इति द्विधा। तत्र गौणी नवविधाभक्ति मुख्या तु परभक्तिरेव। अत एव मोक्षं प्रति अनन्यसिद्धायाः भक्तेः द्वैविध्यमुक्त्वा परभक्तिरेव मोक्षाय कल्पते इति निरूपयितुं प्रथमाध्यायस्य द्वितीयाह्निकारम्भे –**'सा मुख्या इतराऽऽपेक्षितत्त्वात्'**इत्यनेन सूत्रेण सूत्रकारैः प्रकान्तम्। सा परानुरक्तिरूपा भक्तिः अन्यैरपि अपेक्षिता भवति अतः सैव मुख्या सैव च श्रुतिभ्यः प्रमेया इति स्पष्टम् अभिहितम्। **'ईश्वरप्रणिधानाद्वा'**[5]इत्यनेन योगसूत्रेण या भक्तिः योगसाधनरूपेण कथिता साऽपि गौणभक्तिरेव। अतः समाधिसिद्धिर्भवतीत्येव सूत्रकाराणामाशयः। यद्यपि भक्तिः रागरूपा तथापि तत्र तदाश्रयः उत्तमः परमात्मा इत्यतः सैव पराभक्तिरिति कथ्यते। एवं परमेश्वरे परानुरक्तिरूपा भक्तिरेव मुख्यभक्तिरिति तत एव मोक्ष इति च नारायणतीर्थैः बहुधा भक्तिस्वरूपं विवेचितम्। अनयोः येषामनुरागः परिपक्वः तेषां मार्गगत्यभावेन भगवदभेदरूपा भगवत्प्राप्तिर्भवति। येषाञ्च अनुरागः न परिपक्वः तेषान्तु साधनभक्त्या भगवल्लोकप्राप्तिर्भवति इति च नारायणतीर्थैः द्वयोर्वैलक्षण्यं प्रतिपादितम्। **(अपरिपक्वानां**

**साधनभक्तौ अधिकारः)** विषयेऽस्मिन् शङ्का भवितुमर्हति – कथमविपक्वानां साधनभक्त्या भगवल्लोकप्राप्तिः यतः पूर्वमेव तत्त्वज्ञानद्वारा एव साधनभक्तिः भगवल्लोकप्राप्तिहेतुः इति व्यवस्थापितम्। यदि साधनभक्तिः तत्त्वज्ञानहेतुः तर्हि तत्र तत्त्वज्ञानहेतुरूपेण वेदान्तविचारोऽपि श्रोतव्यः मन्तव्यः इत्यादिना वाक्येन उपन्यस्तः। तादृशे विचारे शमदमादिसाधनचतुष्टयसम्पन्नस्यैव अधिकारः न तु मलिनानाम् अविपक्वानाम् एवम् अविपक्वानां साधनभक्तौ न भवत्यधिकारः इति शङ्कितुः आशयः।

एतां शङ्कां समादधानैः नारायणतीर्थैः एवमभिहितम्–नूनमेव स्थाने भवति शङ्केयं तथापि तत्त्वज्ञानं प्रति साधनभक्तिः वेदान्तविचारश्च इत्येतौ द्वावपि विकल्पेन हेतू भवतः अतः विकल्पबलात् वेदान्तविचारं विनाऽपि साधनभक्त्यैव तत्त्वज्ञानद्वारा भगवल्लोकप्राप्तिः सम्भवति। अत्रापि विकल्पद्वयं समुपतिष्ठते यथा –

1) भक्तिः अल्पायाससाध्या विचारश्च कष्टसाध्यः अतः कथमनयोर्विकल्पः?

2) यथा विचारः तात्पर्यावधारणहेतुः तथा भक्तिः तात्पर्यावधारणहेतुः नास्ति अतः द्वयोः द्वारैक्यं न भवति।

**भक्तेः द्वारभेदविचारः**

एतद्विकल्पद्वयं नारायणतीर्थैः एवं निराकृतम् –

1) यथा विचारेण फलमुत्पद्यते तथा श्रवणादिभक्त्यापि फलम् उत्पद्यते। यथा विचारे यज्ञाद्यनुष्ठानसाध्यश्रद्धा अपेक्षते तथा भक्तावपि। अतः विकल्पः सम्भवति मोक्षं प्रति श्रद्धा अपेक्षितैव इत्यतः विकल्पः शक्यः।

2) यदुक्तं भक्तेः तात्पर्यावधारणहेतुत्त्वं नास्ति इति अतः द्वारैक्यं नास्तीति तस्माच्च विकल्पः न भवतीति तत् सत्यमेव यतः मीमांसाशास्त्रेऽपि व्रीहिभिर्यजेत यवैर्यजेत इत्यादि स्थले द्वारैक्यादेव विकल्पः स्वीकृतः। यत्र द्वारभेदः भवति तत्र विकल्पः न भवति। विचारस्य भक्तेश्च द्वारभेदोऽस्ति। विचारे ब्रह्मणि तात्पर्यावधारणेन तत्त्वसाक्षात्कारोदये मोक्षो भवति। साधनभक्त्या तु भगवदनुग्रहेण तत्त्वसाक्षात्कार – परवैराग्य – प्रेमभक्त्युदये मोक्षो भवति अतः द्वयोरपि द्वारभेदः सुस्पष्टः। तस्मात् विकल्पो भवितुं नार्हति इति पूर्वपक्षं विवृत्य नारायणतीर्थैःविचारस्य साधनभक्तेश्च विकल्पः भवितुमर्हतीति समर्थितम्। यथा प्रयाजानामवघातस्य च द्वारभेदकारणेन विकल्पः अशक्यः तथा अत्रापि द्वारभेदो नास्तीति विकल्पः अशक्यवद् भाति। तथापि विचारस्य साधनभक्तेश्च एकप्रयोगविधि गृहीतत्त्वं नास्ति प्रयाजादीनामवघातस्य च एकप्रयोगविधिगृहीतत्त्वमस्ति अतः द्वारभेदेऽपि विकल्पः भवितुमर्हति यथा द्वारभेदेऽपि उद्भिद्–बलभिद्–यागयोः विकल्पः अभ्युपगतः एतस्माद्धेतोः विचारस्यसाधनभक्तेश्च विकल्पः शक्यः नारायणतीर्थानां मतम्।

**पविकल्पविचारः**

परन्तु विकल्पे स्वीकृते अष्टदोषदुष्टत्वमापतति। यथा व्रीहियवयोः विकल्पे स्वीकृते अष्टविधदोषदुष्टत्वं तथा अत्रापि भवेत् तदित्थम् –

1) यदि साधनभक्तिः ज्ञानसाधनं तर्हि विचारवाक्यस्य प्रामाण्यं परित्यक्तं भवति इति प्राप्तपरित्यागः इति एवं दोषः।

2) यदा पुनः वेदान्तविचारः साधनं तदा वेदान्तविचारवाक्यस्य पूर्वत्यक्तं प्रामाण्यं स्वीक्रियेत पूर्वस्वीकृतमप्रामाण्यञ्च परित्यज्येत इति

अप्राप्तस्वीकारः स्वीकृतपरित्यागस्य अत्र त्यक्तस्वीकारः स्वीकृतपरित्यागश्च इति दोषचतुष्टयं भवति।

एवं साधनभक्तेः विषयेऽपि दोषचतुष्टये योजिते अष्टदोषाः भवन्ति। तस्मात् अनयोर्विकल्पः न शक्यः तदपेक्षया अङ्गाङ्गिभावेन समुच्चयः योग्यः तथा हि साधनभक्त्या अन्तःकरणे शुद्धे वेदान्तविचारेण च ज्ञाने प्राप्ते मोक्षो भवति इति पूर्वपक्ष–आशयः।

नारायणतीर्थानां मतानुसारम् एतन्मतं न साधु यतः यद्यपि विकल्पः अष्टदोषदुष्टः तथापि व्रीहियवयोः विकल्पः प्रमाणसिद्धः तथा भक्तिविचारयोः विकल्पः प्रमाणसिद्धः स्वीकर्तव्य एव। अन्यथा भक्तौ सर्वे अधिकारिणः इति वाक्यम् अप्रमाणं भवेत् एवञ्च तयोः निरपेक्षसाधनत्वं बाध्येत अतः द्वयोः भक्तिविचारयोः विकल्प एव न समुच्चयः। समुच्चये स्वीकृते स च समुच्चयः अङ्गप्रधानभावेन वा समप्राधान्येन वा स्वीकर्तव्यो भवति आद्ये एकतरस्य अङ्गत्वबोधकं मानं न दृश्यते अन्त्ये च द्वयोरपि तुल्याधिकारिकत्वं प्रसज्यते इत्यादि हेतोः भक्तिविचारयोः विकल्प एव योग्य इति नारायणतीर्थानां मतम्।

**प्रेमप्रकाराः**

निरतिशयं प्रेमैव भक्तिरित्युक्ते प्रेम्णः कति वा प्रकाराः इति जिज्ञासा भवति। अत्र नारायणतीर्थाः आदौ प्रेम्णः द्वैविध्यं प्रत्यपादयन्। अयञ्च प्रेमद्विधा ईश्वरप्रसादजः भावजश्चेति।[6] तत्र ईश्वरस्य प्रसादाज्जायमानः प्रेम प्रथमः भाव्यगुणश्रवणेन स्नेहाद्युद्दीपनद्वारा द्रुतस्य चित्तस्य धारावाहिकी भाव्याकारा वृत्तिः भावजः प्रेम इति नारायणतीर्थैः वर्णितम्। अस्यां भाव्याकारवृत्तौ विभावादीनां रसरूपतया स्थायिभावस्याभिव्यक्तिमेव रसविदो रसं विदन्तीति नारायणतीर्थाः

कञ्चनविशेषं प्रत्यपादयन्। पुनश्च भावजोऽयम् ईश्वरतद्भक्तप्रसादजः साधनजश्चेत्यपि भवतीति सोदाहरणं भागवतप्रमाणेन विवृतम्।[7]

पुनश्च प्रेमद्वादशधा इत्यादिना उपक्रम्य प्रेम्णः उप्तादिद्वादशप्रकाराः नारायणतीर्थैः वर्णिताः।[8] त एवम् –

1 उप्तम्

यदा चित्ते उत्सुकता जायते तदा श्रीकृष्णादिदर्शनार्थं नियतम् असहनं भवति अयं मम स्यात् इति मनसि या द्रुतावस्था जायते सैव उप्तं प्रेमेति लक्षितम्। अस्य च प्रकारस्योदाहरणं भागवते ऋषिपत्नीनाम् अक्रुरस्य च अवस्था भवितुमर्हति।[9]

2 पत्तम्

कपटेन प्रश्नात् इयमवस्था अभिव्यक्ता भवति। प्रियस्य दर्शनोत्कण्ठायाः चरमावस्था गुणकथनलभ्यादपि परः श्रवणानन्दो भवतीति पत्तं प्रेम। यथा भागवते गोपिकानां रामायणे च जनकस्यावस्था।[10]

3 ललितम्

औत्सुक्यवशात् निर्लज्जतया प्रियं द्रष्टुं यद् धाष्ट्र्यं भवति स्वेदादेः कारणं भवति तत् ललितं प्रेम। यथा–भागवते सुदाम्नः रामायणे च जनकस्य अवस्था।[11]

4 दलितम्

वियोगे शरीरस्य विवर्णत्वं धाष्ट्र्यं यद्भवति तद् दलितं प्रेम। यथा भागवते गोपीनां, महाभारते च युधिष्ठिरस्य।[12]

5 मिलितम्

वियोगानन्तरं प्रियदर्शनेन चित्तस्य द्रवावस्था सुखरूपा मिलितं भवति। यथा भागवते श्रीकृष्णदर्शनोत्सवजनित प्रमोदाः गोप्यः।[13]

6 कलितम्

यदा चित्तस्य भोगवशेन द्रुतावस्था भवति तद् कलितमिति प्रेम। स भोगः प्रेयोविषयजनितः स्वात्मजनितो वापि भवतु द्विधापि परमसुखदः भवतीति तल्लक्षणमुक्तम्। यथा भागवते श्रीकृष्ण–मेलनानन्तरं तदङ्गसङ्ग–प्रमदाकुलेन्द्रियाणां व्रजस्त्रीणां प्रमोदावस्था।[14]

7 छलितम्

असहनेन अनवरत द्रुतिप्राप्तं चित्तमेव छलितं प्रेम भवति। अस्यामवस्थायां तस्मिन्प्रिये कोपजननं साटोपं निन्दारोपं वहति अतिगर्वं दर्शयति। यथा–भागवते सत्यभामायाः कोपवचनम्। यथा वा रामायणे लक्ष्मणस्य।[15]

8 चलितम्

प्रियगमनानन्तरं चित्तस्य द्रवावस्थायां चिन्ता भवति सत्वोद्रेकात् सुखास्वादेन यावस्था भवति तच्चलितं प्रेम। यथा–रामायणे रामे दशरथस्य प्रेम–[16]

9 क्रान्तम्

यदा मनोनीतः प्रियः सम्मुखे भवति तदा परस्माद् वैमुख्यं भवतीत्येतद् क्रान्तरूप–प्रेम। यथा भागवते कृष्णस्य योगीव आनन्दावस्था।[17]

10 विक्रान्तम्

तदेव क्रान्ताख्यं प्रेम विक्रान्तं भवति यदा सः जनः स्वभाग्यं स्वयमभिनीय अन्येषाङ्कृते तस्य दुर्लभत्वं हर्षाद् वदति। यथा भागवते—गोपिकानाम् ब्रह्मणो वा।[18]

### 11 सङ्क्रान्तम्

यदा स्वात्मनिवेदनादनन्तरं पश्चात्तापो भवति तदा सङ्क्रान्तरूपं प्रेम भवति। भागवते—गोपिका पश्चात्तापप्रसङ्गः रामाययणे च सुग्रीवस्य।[19]

### 12 विह्वतम्

पूर्वजन्मनि एतादृशः अनुभवः न प्राप्तः इति चित्तस्य या द्रवावस्था भवति सा कदापि नापगच्छतु इति मुक्तावपि स्पृहाभावः विह्वतं प्रेम। यथा भागवते गोपीनाम्।[20]

### 13 गलितम्

प्रियतमस्य गुणानां स्मरणेन दर्शनेन वा स्वाभाविकी या द्रवावस्था भवति तदा गलितमिति प्रेम भवति। यथा भागवते प्रह्लादस्य।[21]

### 14 सन्तृप्तम्

यदा चैतन्यरूपे सुखे हृदयं निमज्यति ततः परं किमपि न श्रयति पूर्णसुखेन हृदयं पूर्णं भवति तदा सन्तृप्ताख्यं प्रेम। यथा भागवते नारदस्य।[22]

### 15 संहृतम्

यदा सम्पूर्णस्य मनसः परमानन्दे निमग्नतायां मनसः सर्वविषयेभ्यः प्रतिसंहारः संहृतमिति प्रेम। यथा भागवते गोपिकानाम्।[23]

इत्येवं प्रकारत्रयं योजयित्वा पञ्चदशप्रकारः प्रेमविशेषः नारायणतीर्थैः भागवतानुसारं स्वव्याख्याने विवृतः। चित्तस्य द्रवावस्था शाङ्करमतेऽपि कथं सम्भवितुमर्हतीति नारायणतीर्थैः अस्मिन्प्रसङ्गे निरूपितञ्च।[24]

**भक्तेः भूमिकाभेदाः**

परमेश्वरे भूमिकाभेदात् सगुणनिर्गुणज्ञानमपि भवितुमर्हति। समाध्यवस्थायां वर्तमानस्य साधकस्य निर्गुणज्ञानं भवति चेत् व्युत्थानावस्थायां वर्तमानस्य सगुणज्ञानं भवति। यथा एकस्यैव सर्प इति कुण्डलीति च व्यपदेशः शक्यः तथा एकस्यैव परमेश्वरस्य सगुणनिर्गुणस्वरूपं न दुःशकम् एतदेव मनसि निधाय नारायणतीर्थैः भूमिकाभेदाश्च भक्तिसंप्रदायानुसारं समुपवर्णिताः। ते भेदाः एकादश एवं भवन्ति[25]–

1) महतां सेवा, 2) तेषां दयापात्रता, 3) तेषां धर्मेषुश्रद्धा, 4) हरिगुणश्रवणम्, 5) प्रेमाङ्कुराः 6) स्वरूपज्ञानम्, 7) प्रेमवृद्धिः, 8) भगवतः स्फुरणम्, 9) भगवद्धर्मनिष्ठा, 10) स्वस्मिन् तद्गुणशालिता, 11) प्रेमपराकाष्ठा।[26]

1 महतां सेवा

सच्चिदानन्दरूपस्य श्रीकृष्णस्य त्रिकरणभक्ताः श्रीकृष्णे परामनुरक्तिं धरन्तः तस्य प्रीत्यै यद्यद् कर्म कुर्वन्ति सा प्रथमभूमिका। इयञ्च भगवत्सेवा परा भगवद्भक्तसेवा परा इति द्विविधा नारायणतीर्थैः स्पष्टीकृता।[27]

2 तद्दयापात्रता

भगवतः भगवद्भक्तस्य च निरन्तरसङ्गात् तद्दया भवति, एषः दुःखमाप्नोतु इति तेषां मनो भवति एषा भूमिका दयापात्रता। एषा च स्वप्रयत्नं विनापि क्वचिद्भवति क्वचिद् प्रयत्नमपेक्षं भवति।[28]

### 3 तेषां धर्मेषु श्रद्धा

एवं भगवतः भगवद्भक्तस्य च दयापात्रं भूत्वा कार्यान्तरे अरुचिं वहन् तेषामेव गुणानुरक्तो भूत्वा तेषां धर्मेषु श्रद्धां वहति चेत् तृतीयाभूमिर्भवति।[29]

### 4 हरिगुणश्रवणम्

लौकिकं सर्वमपि विहाय भगवति परानुरक्त्या तस्यैव गुणश्रवणादिकं चतुर्थीभूमिका भवति।[30]

### 5 प्रेमाङ्कुराः

भगवतः भगवद्भक्तस्य च गुणश्रवणेन स्थायिभावंरूपं प्राप्य भगवत्स्वरूपा या वृत्तिः अङ्कुरति सा प्रेमाङ्कुरेति पञ्चमी अवस्था।[31]

### 6 स्वरूपज्ञानम्

एतद् भक्तेः स्वरूपमिति शास्त्रे गदितम् इतः स्वरूपादिगमो भवतीति नारायणतीर्थैः विवृतम् एषा षष्ठी भमिका।[32]

### 7 प्रेमवृद्धिः

परमानन्दस्वरूपस्य भगवतः श्रवणेन दर्शनेन प्रपञ्चवैमुख्यं भूत्वा यः परानन्दो भवति तस्य चेष्टाभिः सुकृतीनामनुभवो भवति ता प्रेमवृद्धिरिति सप्तमी भूमिका। नारायणतीर्थानां मतानुसारम् एतदुत्पत्तिपर्यन्तमेव

साधनाभ्यासः अतः इतःपरं भूमिकाचतुष्टयम् अप्रयत्नेनैव साध्यमिति ते विवृण्वन्ति ।[33]

**8 भगवतः स्फुरणम्**

भगवति प्रेमकारणेन विषयवैमुख्ये जायते प्रेमवृद्धेश्च साक्षात्कारानन्तरं भगवता सह भाषते तं पश्यति आत्मनि तुष्यति च इतीयं भूमिका स्फुरणनामिका। एतस्याः कारणेन अनर्थनाशो भूत्वा भक्तः सततमानन्दितो भवति ।[34]

**9 भगवद्धर्मनिष्ठा**

भगवतः श्रवणकीर्तनस्मरण सेवनार्चन वन्दनदास्यसख्यात्म–समर्पणादि स्वप्नेऽपि यदा न त्यज्यते तदा नवमी भूमिका ।[35]

**10 स्वस्मिन् तद्गुणशालिता**

एवं सततनिष्ठया स्वस्मिन्नपि भगवत्समान गुणयोगो भवति, सा दशमी भूमिका ।[36]

**11 प्रेमपराकाष्ठा**

ततश्च भगवति परानुरक्तिकारणेन तस्य विरहः असह्यो भूत्वा निमेषोऽपि यदा युगायते तदा प्रेम्णः पराकाष्ठा भवति एषा एकादशी भूमिका। इयं चतुर्विधा नारायणतीर्थैः स्पष्टीकृता ।[37] इत्थं भक्तस्य भूमिकाभेदाः नारायणतीर्थैः भागवताधारेण स्वव्याख्याने विशेषतः व्याख्याताः ।

**भक्तिः पुरुषार्थः**

भक्तिः पुरुषार्थकारिणी वा भक्त्या कीदृशः पुरुषार्थः सिद्ध्यति इत्यादयः विचाराः भक्तिचन्द्रिकायां विस्तरशः चर्चिताः ।

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टये भक्त्या कीदृशः पुरुषार्थः सिध्यति इति प्रथमं विचार्यते। साधनभक्तिः साध्यभक्तिरिति द्विविधा या भक्ति–र्ज्ञायते तत्र साध्यभक्तेः केषाञ्चन संप्रदायेषु स्वतः पुरुषार्थत्वात् पुरुषार्थसाधनत्वं नास्ति।साधनभक्तेस्तावत् मोक्षाख्यस्य पुरुषार्थस्य साधनत्वेन निर्देशः कृतो दृश्यते।[38] 'अत्यन्त–पुमर्थोपायत्त्वात् भक्तिर्निरूप्यते'[39] इति स्वव्याख्यानारम्भे निर्दिश्यनारायणतीर्थाःभक्तेः स्वरूपं मोक्षोपायरूपेण प्रत्यपादयन्। अत्यन्तपुमर्थस्तावत् मोक्ष एव। तेनैव मनुष्यजन्मनः सार्थक्यं शास्त्रेषु प्रतिपाद्यते। यतो हि यदाश्रित्य जन्मसाफल्यं भवति तस्यैव पुमर्थत्वं नान्यस्य।

भक्तेः पुरुषार्थसाधनत्वं वदतां मते तावत् भक्तिः मोक्षसाधनम्। अतः मोक्षः भक्तिसाध्यो भवति। इयमेव गौणभक्तिरिति व्यवह्रियते। अत्रैव सर्वेऽपि श्रवणादिभक्तिप्रकाराः अन्तर्भवन्ति। परन्तु भक्तिसांप्रदायिकानां मते तावत् भक्तिरेव स्वयंसाध्या न तु साधनरूपा। अतः भक्त्या अन्यत् किमपि साध्यं न भवति। एवं भक्तिमेव साध्यत्वेन प्रतिपाद्य एते मोक्षमपि न्यक्कुर्वते। अत एव भगवद्भक्तिः पुमर्थरूपा इति शास्त्रे प्रतिपाद्यते। नारायणतीर्थानाम् मतानुसारं समाधिसुखस्य इव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वम्। अत एव धर्मार्थकाममोक्षेषु पुरुषार्थेषु भक्तेरन्तर्भावं निराकुर्वद्भिः

नारायणतीर्थैः कथितं यत् – धर्मार्थकामानां स्वतःपुरुषार्थत्त्वे गौरवादननुगमाच्च भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वम्।

अर्थात् चतुर्विधपुरुषार्थेषु धर्मार्थकामानां स्वतः पुरुषार्थत्त्वं नास्ति यतः तावता तेषामन्यतरस्य पुरुषार्थत्वे गौरवदोषो भवति। अतः धर्मजन्यत्वादिविशेषणं विहाय सुखमात्रं पुरुषार्थ इत्युच्यते चेत्

भक्तिसुखस्यापि पुरुषार्थत्वं भवति। भक्तिरियं मोक्षे वा धर्मे वा अन्तर्भवितुमर्हति। अतः नारायणतीर्थाः वदन्ति मोक्षसमीपवर्तितया भक्तेः मोक्षान्तर्भावित्वं, योगजधर्मजन्यतया धर्मान्तरर्भावित्वं शक्यते तर्हि भागवतधर्मजन्यतया भक्तिसुखं धर्मान्तर्भावि भवितुमर्हति। भक्तः संसारात् मोक्षमभिलषति अतः भक्तियोगः मोक्षेप्यन्तर्भवति। अथवा स्वतन्त्ररूपेण भक्तिः पुरुषार्थो भवितुमर्हति। एवं भक्तिविषयकं चिन्तनं विधायं नारायणतीर्थाः एवं प्रतिपादयन्ति यद् भक्तियोगः पुरुषार्थचतुष्टयान्तर्गतत्त्वेन स्वातन्त्र्येण वा पुरुषार्थे भवति। परमानन्दरूपत्त्वात् तस्यैव भक्तियोगस्य पुरुषार्थत्त्वं तमुद्दिश्यैव च विवेकिनां प्रवृत्तिः उचिता भवति।[40]

भक्तेः स्वतन्त्रपुरुषार्थत्वं समर्थयद्भिः आचार्यैः सूत्रस्य व्याख्यानप्रसङ्गे स्पष्टमभिहितं यद् फलभक्त्यवस्थायां तावत् मोक्षेच्छापि न भवति।[41] अर्थात् साधनभक्तौ मोक्षं वाञ्छन्तः अपि भक्ताः फलभक्त्यवस्थायां तां वाञ्छामपि परिहाय फलरूपभक्तौ तन्मया भवन्ति। भगवत्येव आसक्तानाम् एतेषां भक्तानां मोक्षापेक्षया भगवद्सामीप्यं प्रियतरं भवति। अस्याः भक्तेः परमानन्दरूपत्वात् अस्यामेव आसक्तिः सहजा।

अत्र कश्चिदाक्षेपो भवितुमर्हति – सगुणस्येव निर्गुणस्य परमानन्दरूपता पुरापि प्रतिपादिता तथापि सगुणस्य मायया आवृतत्वात् सा आनन्दरूपता कथं वा स्फुरेत्। अस्फुरणे च भक्तानां तत्र अपुरुषार्थत्वमेव स्यात्। अमुमाक्षेपं समादधद्भिः नारायणतीर्थैः कथितं यद् 'श्रवणकीर्तनादिना भक्तेः परिपाके जाते ततः भगवदनुग्रहो भवति ततश्च तत्त्वज्ञानं भवति। तत्त्वज्ञानेन मायावरणे भग्ने मायावृतता इत्येतद् न तिष्ठेत्।

नारायणतीर्थानां मतानुसारं भक्त्यावेशात् भगवदनुग्रहतः प्रत्यगभेद – अंशावरणशक्तिनाशोऽपि शक्यते। यद्यपि रागरूपप्रेमभक्तेः मूर्तिपरिच्छेद स्फूर्तेश्च अंशावरणशक्तिनाशः न भवेदिति भयात् तथापि भगवदनुग्रहेण तन्नाशः शक्यः।

नारायणतीर्थानां मतानुसारं ज्ञानमार्ग भक्तिमार्गश्चेति भवति मोक्षमार्गद्वयम्। तत्र भक्तिप्रस्तावे निर्गुणनिष्ठायाः निन्दा गीतासु दृश्यते। यथा होमप्रकरणे उदिते जुहोति अनुदिते जुहोति इत्युभयमुक्त्वा सूर्योदयात्पूर्व क्रियमाणस्य होमस्य निन्दाकृता तथा निर्गुणनिष्ठायाश्च निन्दा कृतावगन्तव्या। तत्र होमप्रकरणे पूर्वापेक्षया परस्य निन्दितत्वं तथा अत्रापि सगुणापेक्षया निर्गुणनिष्ठायाः निन्दा कृतेति भावनीयम्।

एवञ्च भक्तिमार्गस्यापि पुमर्थोपयोगित्वं स्वतन्त्रपुमर्थत्वं वा शक्यमिति नारायणतीर्थानां मतम्।

अत्र पुनराक्षेपो भवितुमर्हति। भागवते तावत् सर्वत्र आसक्तिपरिहाराय यथाकथञ्चित् साम्मुख्यमात्रं कर्तव्यमितिमुपदिश्यते। एतत् त्रिधा भवति[42]–

1) निर्गुणस्य निर्विशेषस्य ब्रह्मणः प्राप्त्यर्थं ज्ञानरूपं कर्तव्यम्।

2) सगुणस्य सविशेषस्य च भगवदाविर्भावस्य भक्तिरूपम्,।

3) तदुभयस्य द्वारं कर्मार्पणरूपम् अर्थात् कर्मयोगः।

एवं ज्ञानभक्तिकर्मरूपयोगाः तत्तदधिकारिभेदेन पुरुषयोग्यताभेदेन व्यवस्थापयितुं त्रयाणामेव उपायत्वं स्वंय भगवान् भागवते समर्थयामास यथा –

**योगास्त्रयो मया प्रोक्ताः नृणां श्रेयो–विधित्सया।**

**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कर्हिचित्।।**[43]

एवमुपायत्रयं प्रतिपाद्य पुनश्च –

**मन एकत्र संयुज्यात् जितश्वासो जितासनः।**

**वैराग्याभ्यास–योगेन ध्रियमाणमतन्द्रितः।।**[44]

इति अष्टाङ्गयोगस्यापि चतुर्थमार्गत्वेन प्रतिपादनं कृतम्। अतः कथं मार्गद्वयमेव मोक्षस्य भवतीति आक्षेपस्वरूपम्।

एतस्य समाधानं नारायणतीर्थैः एवं प्रदत्तम् – यद्यपि भागवतस्य उदाहृतश्लोकानामधारेण उपायचतुष्टयस्यापि प्रतिपादनं दृश्यते तथापि कर्मयोगः अष्टाङ्गयोगश्च चित्तशुद्धिं जनयित्वा तद्द्वारा ज्ञानस्य भक्तेः वा उपयोगात् तयोः न पृथग्गणना। अतः ज्ञानं भक्तिश्चेति द्वावेव मोक्षमार्गाविति नारायणतीर्थानां निष्कर्षः।[45]

अनयोर्द्वयोः पृथङ्मोक्षमार्गत्वे कारणं तयोः विभिन्नस्वरूप–फल–साधन–आधिकारिकत्वमिति नारायणतीर्थाः विवृण्वन्ति। अर्थात् यतः भक्तिज्ञानयोः स्वरूपं फलं साधनानि अधिकारी च भिन्नाः अतः द्वावपि भिन्नौ मोक्षमार्गौ इति समञ्जसं भवति। तत्र ज्ञानमिति बुद्धेरवान्तरजातिः भक्तिरिति द्वयोरपि स्वरूपं भिन्नम्। तथैव सर्वेषामनर्थानां मूलकारणस्य अज्ञानस्य निवृत्तिः ज्ञानफलं ब्रह्मप्राप्तिः भक्तिफलमिति द्वयोः फलमपि भिन्नम्। एवं भक्तिज्ञानयोः साधनमपि भिन्नमेवाज्ञानस्य साधनं तावत् तत्त्वमस्यादिमहावाक्यं भक्तेश्च भगवतः गुणगानपराणां ग्रन्थानां श्रवणादिकं एवं द्वयोरपि अधिकारीणौ च भिन्नौ यतः ज्ञाने साधनचतुष्टयसम्पन्नः त्यक्तसंसारः अधिकारी भक्तौ तावत्

अतादृशोऽपि अधिकारीति कारणेन न द्वयोः सादृश्यम् तस्मात् मोक्षे मार्गद्वयमेवेति आस्माकिनः पन्थाः इति स्पष्टम् प्रत्यपीपदन् नारायणतीर्थाः।[46]

परन्तु केचन ज्ञानयोगस्यैव मोक्षसाधनत्वं स्वीकुर्वते तेषां मतानुसारं मनसः
द्रवीभावानपेक्षायामद्वितीय–आत्ममात्र–गोचरानिर्विकल्पकमनोवृत्तिः ब्रह्मविद्या सैव ज्ञानम्। भक्तिस्तावत् मनसः द्रवीभावपूर्विका भगवदाकारतासविकल्पकवृत्तिरूपा इत्यतः भक्तिः ज्ञानस्य अवान्तरजातिरेव। ज्ञानस्य फलं मोक्षः भक्तेश्च फलं ज्ञानमेव। परं ज्ञाने साधनचतुष्टयसम्पन्नः भक्तौ सर्वोऽपि जनः अधिकारी अतः ज्ञानयोगे एव भक्तियोगादिमार्गस्य अन्तर्भावो भवितुमर्हति तस्मात् ज्ञानयोगो एव एकः मोक्षमार्गः भक्तिश्च तत्साधनमिति तेषामभिप्रायः।[47]'मोक्षसाधनसामग्र्यां भक्तिरेव विशिष्यतें इति कथयद्भिः शङ्करभगवत्पादैरपि भक्तेः ज्ञानसाधनत्त्वं प्रतिपादितं दृश्यते।

परन्तु नारायणतीर्थानां मतानुसारम् एतच्चिन्तनं न विचारसहम् यतः भक्तेः साध्यसाधनरूपेण व्यवस्थाद्वैविध्यं प्रतिपाद्यफलभक्तेः रागावान्तरजातित्वस्य प्रामाणिकत्वात् मोक्षे भक्तिज्ञानरूपं मार्गद्वयमेव स्वीकर्तुं योग्यम् इति निष्कर्षः।[48] एवं स्वमतानुसारं भक्तिज्ञानयोः मोक्षमार्गत्वं व्यवस्थाप्य शाण्डिल्यमतानुसारं सिद्धान्तं प्रतिपादयन्ति यत् शाण्डिल्यमहर्षिणां मतानुसारं भक्तिरेव मोक्षमार्गः ज्ञानं तावत् तत्साधनम्। द्वयोरपि न भिन्नमार्गत्त्वं यतः फलभक्तिः न साधनं किन्तु स्वयं पुमर्थरूपा अतः परभक्तिरिति व्यवह्रियते।[49]

**भक्तेः रसत्वप्रतिपादनम्**

भक्ती रसरूपा भवति वेति शास्त्रे विवेचितं दृश्यते। तत्र भरतनाट्यशास्त्रे भक्तेः रसरूपेण उल्लेखाभावात् भक्ते रसत्वं नास्तीति बहवो वदन्ति। तथापि भक्ते रागरूपत्वात् रागस्य च आनन्दात्मकत्वात् भक्तिरपि रस एवेति भक्तिसंप्रदायः। तमेव संप्रदायम् अनुरून्धानैः नारायणतीर्थैः भक्ते रसरूपत्वे सोपपत्तिः काचन चर्चा विहिता। '**द्वेषप्रतिपक्षभावात् रसशब्दाच्च रागः**'[50] इति शाण्डिल्यसूत्रम्। सूत्रेणानेन भक्ती रस एवेति दर्शितम्। अत्र कारणद्वयम् अस्ति। एकं द्वेषप्रतिपक्षभावः अपरं रसशब्दः, अर्थात् द्वेषस्य विरोधी रागः भक्तिरूपः। रसशब्दादपि स एव रागः भक्तिर्भवति अर्थात् विभावादिभिः अभिव्यक्तः राग एव मुख्यरसशब्दात् तथा भक्तौ रसशब्दस्य प्रयोगबाहुल्यात् भक्ती रस एव। अत्र च रसस्य रागस्य च अभेद एव। यद्यपि विषयरागः भक्तिशब्दवाच्यो न भवति तथापि भगवद्विषयकः स एव रसो भवति इति सिद्वान्तः। अत्र भागवत–स्कन्द–पुराणादिभ्यः श्लोकानुद्धृत्य नारायणतीर्थाः भक्ते रसरूपं प्रतिपादयन्ति।[51] तेषां मते भगवतः चरणयोः माधुर्यगङ्गाम् अवगाहमानस्य मनसः समुल्लास एव राग–प्रेमादि शब्दैः अभिधीयते स एव स्वानन्दमाविर्भावयन् कार्यकारणादिभिः लिङ्गैः अभिव्यक्तः रसरूपो भवति तस्य स्थायी भावः रतिर्भवति। सः मोक्षमपि तिरस्कुर्वन् फलभक्तिरिति भक्तिशास्त्रे प्रसिद्धम्। एतेन नारायणतीर्थाः. भक्ते रसरूपत्वं सविशेषं प्रतिपाद्य तस्य विभावाद्युपस्थापनमपि प्रदिदर्शयन्ति।

भक्तेर्ज्ञानस्यच महदन्तरं व्याचक्षाणाः नारायणतीर्थाः स्पष्टं कथयन्ति यत् ज्ञानं श्रवणादिसहायैः क्रमेण भवति। भक्तिस्तु साक्षात् परमेश्वरकृपया

भवती नान्यसहायमपेक्षते। ज्ञानेन अविद्यानाशो भवति स एव मोक्ष इति ज्ञानवादिनां पक्षः। परन्तु अविद्यानाशरूपोऽयं मोक्षः निर्विषयतया ब्रह्मसुखसंविदं नालिङ्गतीति स्वतः सः मोक्षः पुरुषार्थो भवितुं नार्हति। तदपेक्षया भक्तिस्तु भगवद्विषया रसत्वेन भगवद्सुखसंविद् आलिङ्गत इति नारायणतीर्थाः वर्णयन्ति। भरतरससूत्रे प्रत्येकं रसस्य विभावादयो दर्शिताः। यदि भक्ती रसः तर्हि तस्यापि विभावादिकं प्रदर्शनीयं भवति। नारायणतीर्थाः स्वव्याख्याने रसस्य विभावादिकमेवं प्रदर्शयन्ति।

रससूत्रं –'**विभावानुभावव्यभिचारसंयोगात् रसनिष्पत्तिः**'[52] स्थायिभावस्य विभावादिभिः संयोगे जाते रसो निष्पद्यते इति भरतसूत्रार्थः।

भक्तिरसे रत्याख्यस्थायिभावेन सह विभावादीनां संयोगेन भक्तिरसो निष्पद्यते। अत्र विभावदयः एवम् –

**विभावः**– यत्र येन च रसो विभाव्यते स विभावः इति लक्षणमुक्त्वा नारायणतीर्थाः तस्य द्वैविध्यमेवं प्राकाशयन्।

**आलम्बनविभावः**

यमुद्दिश्य यत्र च रतिः प्रवर्तते सः आलम्बन विभावः इति लक्षणमुक्त्वा भक्तिरसस्य आलम्बनविभावस्य उदाहरणरूपेण भागवतात् श्रीकृष्णप्रसङ्गम् उदाहरन्ति–

**स्वयन्तुसाम्याऽतिशायस्त्र्यधीशः**
**स्वाराज्यलक्ष्म्याऽऽप्तसमस्तकामः।**
**बलिं हरद्भिश्चिरलोकपालैः**
**किरीटकोट्येडितपादपीठः।।**[53]इति

अत्र तत्तत् विशेषणविशिष्टः श्रीकृष्णः सर्वेषां भक्तानां भक्तिभावस्य आलम्बनकारणमिति ज्ञायते। एवं भागवते प्रायो बहुत्र श्रीकृष्ण एव भक्तेरालम्बनत्वेन समुपवर्णितः। एवम् आलम्बनविभावस्य स्वरूपमुक्त्वा नारायणतीर्थाः उद्दीपनविभावस्य स्वरूपं कथयन्ति –

**उद्दीपनविभावः**

यस्मिन्कृते रस उद्दीप्तः पुष्टो भवति सः उद्दीपनविभाव इति। भागवते स्थाने स्थाने समुपवर्णितः भगवच्चेष्टाः चारुगुणाः वंशीध्वनिः सुस्मितं तुलसीपत्रं तुलसीगन्धः श्रीकृष्णेन यापिता यामिन्यः वृन्दावनभूमयः याः श्रीकृष्णचरणाङ्किताः इत्येतद् सर्वं गोपगोपिकानां कृते भगवदनुरक्तेः उद्दीपनविभावत्वेन गृह्यते अतः सर्वमेतद् उद्दीपनविभावः। अत्रापि नारायणतीर्थाः भागवतसन्दर्भानामुल्लेखेन विभावद्वयमपि सम्यक् निरूपयन्ति।

**अनुभावाः**

यैः रसोऽनुभाव्यते अर्थात् प्रकाश्यते ते अनुभावाः।

अर्थात् येषां सामर्थ्येन अपरस्यहृदयेस्थितः भावः अनुभाव्यते अर्थात् प्रकाश्यते ते अनुभावाः इति। गीति–क्रोषन–नृत्य–भूविलुठित–श्वासाः–तनुमोटन–लालास्रावः–जनअनवेक्षणं–हिक्का–अट्टहासः–भ्रमिः–हुङ्कारः–परिज्रुम्भणम्–इत्यादयः अस्मिन्प्रसङ्गे अनुभाव–रूपेण नारायणतीर्थैः कथिताः। अपि च भागवतात् गोपिकानाम् अनुभाववर्णनमपि कृतम्। अपि च ते सर्वे स्निग्ध–दिग्ध–रुक्षभेदेन त्रिधा भवन्ति इत्यपि प्रपञ्चितम्। एवं भक्तिरसस्य अनुभाववर्णनानन्तरं व्यभिचारिभावाः कथिताः।

**व्यभिचारिभावाः**

विशेषतः अभिमुखतः रत्यादेः ये चारयन्ति ते व्यभिचारिभावाः इति व्यभिचारिभावानां स्वरूपमुक्त्वा नारायणतीर्थैः ते च इत्थं परिगणिताः –

1) निर्वेदः 2) गर्वः 3) मदः 4) दैन्यं 5) ग्लानिः 6) विषादः 7) मोहः 8) शङ्का 9) वितर्कः 10) स्मृतिः 11)व्रीडा 12) जाड्यं 13) असूया 14) उग्रमतिः 15) हर्षः 16) धृतिः 17) उत्कण्ठा 18) निद्रा 19) अपस्मारः 20)चापल्यम् 21) श्रमः 22) आलस्यं 23) स्वापः 24) चिन्ता 25) आवेगः 26) ऋजा 27) भयं 28) अवहित्था 29) उन्मादः 30) कथा

एतैः व्यभिचारिभावैः स्वान्तःस्थितः रसः अभिव्यज्यते। एवं भक्तेः रसत्वप्रतिपादनम् शास्त्रीयया रीत्या नारायणतीर्थैः कृतम्।[54]

परन्तु विषयेऽस्मिन् अनुभावदीनामङ्गत्वे काचिच्छङ्का भवितुमर्हति। विभवास्तावत् रसपुष्टिकराः अतः रसस्वरूपनिर्वर्तकत्वात् ते रसस्य अङ्गानि भवितुमर्हन्ति। अनुभावास्तावत् स्वरनेत्रादि विक्रियारूपाः भावोत्पत्त्यनन्तरमेव जायन्ते अतः एतेषां रसस्वरूपनिर्वर्तकत्वं नास्ति अतः अनुभावादयाः रसस्य अङ्गानि भवितुं नार्हन्ति[55] इति शङ्कायाः स्वरूपम्। एतां शङ्कां प्रस्तुत्य नारायणतीर्थाः एताम् एवं समादधति –

नूनमेव अनुभावादयः नसाक्षाद्रसपोषकाः । तथापि तेषामङ्गत्वे न कोऽपि बाधः। स्वरूपनिर्वर्तकत्वाभावेऽपि अङ्गत्वं भवितुमर्हति यथा दर्शादौ अनुयाजाः प्रयाजवत् स्वरूपनिर्वर्तकाः न तथापि क्रत्वङ्गत्वं तेषां भवत्येव तथा अनुभावादीनां स्वरूपनिर्वर्तकत्वरूप–अङ्गत्वाभावेऽपि योग्यतासम्पादकत्वरूपअङ्गत्वं भवत्येव। एवं अनुभावादयः रसाभिव्यञ्जकाः इत्यतः रसप्रतीतिजनकत्वेन अनुभावादयः रसस्य अङ्गानि भवितुमर्हन्ति।[56]

एवं भक्तेः रसत्वं प्रतिपादयद्भिः नारायणतीर्थैः भागवताधारेण भक्तेः रसरूपत्वं सपरिकरं निरूपितम्। भक्तौ रसशब्दप्रयोगस्तावत् दरीदृश्यते तेन भक्ते रसरूपत्वं सुस्पष्टं भवति एवमुक्त्वा नारायणतीर्थाः भक्तिरसस्य विभावादीनां स्वरूपवर्णनं सोदाहरणं व्यधुः। अत एव पञ्चमे मङ्गलश्लोके –

**परप्रेमा सेऽयं भवति परमानन्दमधुरा।**

**पराभक्तिः प्रोक्ता रस इति रसास्वादनचणैः।।**[57]

इति भक्तेः स्पष्टमेव रसरूपत्वमुक्तम्। इयं भक्तिः साध्यरूपैव श्रेष्ठेति स्पष्टमुक्तम्।

अयञ्च भक्तिरसः प्रेमरूपमालम्बनमाश्रित्य भिद्यते। यथा नारायणतीर्थैः स्वव्याख्यारम्भे कथितं –'**अयञ्च प्रेमद्विधा ईश्वरप्रसादजः भावजश्च इति**।'[58] अनयोः भावजः बहुधा भक्तिसाहित्ये व्याकृतः। भाव्यगुणश्रवणेन स्नेहादि–उद्दीपनद्वारा द्रुतस्य चित्तस्य धारावाहिकी भाव्याकारा वृत्तिरेव भावः। भगवति या अविच्छिन्ना मनोगतिरुत्पद्यते सैव भाव इति निगद्यते। अस्यामेव मनो–गतौ विभावादिना रसरूपतया यः अभिव्यज्यते सः परमानन्दलक्षणः भाव्याकारः रसः अनपायरूपेण तिष्ठति तमेव रसं वदन्ति रसविदः।

लौकिक रसे भक्तिरसे च महद्वैलक्ष्यमस्ति। लौकिकरसे श्रृङ्गारादौ विषयावच्छिन्नस्य चिदानन्दांशस्य स्फुरणं भवति। अतः अस्मिन् आनन्दांशः न्यून एव। तदपेक्षया भक्तिरसे अनवच्छिन्नस्य चिदानन्दघनस्य स्फुरणं भवति अतः भक्तिरसे आनन्दस्य आधिक्यात् लौकिकरसापेक्षया भगवद्भक्तिरस एव सर्वैः सेव्यः इति नारायणतीर्थाः तद्वैलक्षण्यमपि सुस्पष्टं व्याचक्रुः।[59]

**भक्तेः श्रेष्ठता ब्रह्मसंस्थावाक्यविचारश्च**

भक्तिचन्द्रिकायां **ब्रह्मसंस्थोऽमृतत्वमेति** इतीदं वेदान्तवाक्यमाश्रित्य काचिच्चर्चा विहिता। यथा स्वज्ञानं स्वाविद्यानाशक्षमं तथा भक्तिः भवितुं नार्हति इति कारणेन भक्तिर्निष्फला भूत्वा श्रद्धालुभिः लोपादेया भवति इति काचिच्छङ्का भवितुमर्हति। तां शङ्कां परिजिहीर्षुभिः सूत्रकारैः '**तत्संस्थस्यामृतत्वोपदेशादिति**'[60] सूत्रेण भक्तेस्सफलत्वमुपादेयत्वञ्च निरदर्शि। **ब्रह्मसंस्थोऽमृतत्वमेतीदं**[61] वाक्यं छान्दोग्योपनिषदि वर्तते, तत्र च ब्रह्मणि वर्तमाना संस्थितिः अमृतत्वं प्रददाति इति स्पष्टं प्रतिपादितम्। तत्र च ज्ञानमार्गानुयायिनां मते तावत् ब्रह्मसंस्था शब्दस्य ज्ञानेन ब्रह्ममात्रनिष्ठा इत्यर्थो गृह्यते एवञ्च निष्ठा शब्दस्यसंस्थितिपर्यायकस्य तात्पर्यविषये किञ्चिदत्र विवेचितम्।

सूत्रमिदं व्याचक्षाणैः नारायणतीर्थैः संस्थाशब्दस्य निष्ठेति व्याख्यां कृत्वा अनुरक्तिरिति अर्थो दर्शितः अर्थात् अन्यानुरागत्यागेन ब्रह्मणि या परानुरक्तिर्भवति सैव वेदान्तवाक्येऽस्मिन् संस्थाशब्देन बोध्यते इति नारायणतीर्थानामाशयः।[62] यस्य च एतादृशी निष्ठा भवति सैव अमृतो भवतीति सूत्रार्थः वर्णितः। एवञ्च भक्तिः स्वतः पुरुषार्थसाधनं भूत्वा मुमुक्षुभिरुपादेयैव भवतीति सिद्धान्तीक्रियते।[63] अत्र च ज्ञानात्भक्तैर्वैलक्षण्यं नारायणतीर्थैः सम्यग्प्रदर्शितम्। ज्ञाने यद्विषयकं ज्ञानं जायते तद् तद्विषयकमज्ञानं विरोधविषयतया निवर्तयतीति स्पष्टम्। भक्तौ तादृशं न भवति। भक्तिस्तावत् विरोधिविधया

निवर्तनाक्षमा भवति चेदपि अनुग्रहद्वारा अविद्यां नाशयितुं क्षमते। अत एव 'यमेवैष वृणुते' इत्यादिना श्रुतिरपि भक्तेस्तादृशं स्वरूपं प्रमाणयति।[64]

अत्र च कश्चन विषयः विवेचनमर्हति। नारायणतीर्थानां मते तावत् परानुरक्तिः भक्तिनामिका स्वतः पुरुषार्थरूपा भवतीति कारणेन मोक्षे तस्या न कोऽपि उपयोगः। ज्ञानस्य तु तादृशभक्तिजनकत्वेन भवेदुपयोगः। एवं सति पुनश्च भक्तेरूपयोगिता विषये सशङ्को भवति प्रेक्षावान् जनः। तथापि भक्तेरपि मोक्षसाधनरूपेण उपादेयत्वमस्तीति दर्शयितुं सूत्रमिदं प्रवृत्तमिति नारायणतीर्थाः विवेचयन्ति। यथा प्रतियोगिजनकसामग्री प्रागभावं नाशयति तथा तत्त्वज्ञानप्रागभावरूपस्य अज्ञानस्य नाशो प्रतियोगिजनकसामग्रीरूपा गौणभक्तिः कारणं भवितुमर्हति इति नारायणतीर्थानां विवरणम्। 'ब्रह्मसंस्था' शब्दस्य गौणभक्तिरूपमर्थं साधयितुं नारायणतीर्थाः व्याख्यानान्तरं प्रस्तुवन्ति। एतदनुसारं तत्संस्थस्यामृतत्वोपदेशादिति सूत्रे तत्संस्थेति पदं प्रणवनिष्ठां वक्ति। तत्पदं प्रणवपरं। तस्मिन् प्रणवे संस्था नाम निष्ठा यस्य भवति तस्य अमृतत्वं भवति इति सूत्रार्थः सम्पद्यते। यतः प्रणव एव ब्रह्मप्रतीकत्वेन शास्त्रे प्रसिद्धः। अत एव '**ब्रह्मणःकोशोऽसि मेधया पिहितः**'[65]इति तैत्तिरीयोपनिषद्यपि प्रणवस्य परब्रह्मपरत्वं, स्पष्टम् अभिहितम्। एवमेव योगशास्त्रेऽपि '**ईश्वरप्रणिधानाद्वा**'[66] इति सूत्रेण ईश्वरप्रणिधानस्य समाधिफलप्रतिपादनप्रसङ्गे ईश्वरस्वरूपानन्तरं ईश्वरवाचकरूपेण प्रणवः प्रतिपादितः तस्य वाचकः प्रणवः इति सूत्रेण। एतेन प्रणवस्य योगशास्त्रप्रतिपादित परमेश्वरवाचकत्वमपि सिद्धं भवति। एवं तत्संस्थस्य इति सूत्रांशस्य ब्रह्मप्रतीकप्रणवार्थबोधकत्त्वम्। अमृतत्त्वमेतीति पदेन च प्रणवोपासनायाः फलं प्रदर्शितं भवति। परन्तु तज्जपस्तदर्थभावनमिति योगशास्त्रे प्रणवजपस्यैव प्राधान्यम् अभिहितं

चेदपि भक्तिशास्त्रे प्रणवजपस्य उपलक्षणत्वात् श्रवणकीर्तनादिनामपि सर्व पुरुषार्थसाधनत्वम् अक्षुण्णमेव।

ब्रह्मसंस्था—शब्दस्य ब्रह्मनिष्ठेति विवरणेऽपि निष्ठाशब्दस्य ज्ञानपरत्वं स्वीक्रियताम्। यतः ज्ञानमेव हि गौणभक्तेः फलम् मुख्यभक्तेश्च साधनम् अतः ज्ञाननिष्ठस्यैव अमृतत्त्वप्राप्तिः न तु भक्तिनिष्ठस्येति कथं न स्वीक्रियते? इति शङ्का भवितुम् अर्हति। '**ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः**'[67] इति सूत्रकाराः स्वयम् अग्रिमसूत्रेण तदेव विशदयन्ति। तेषां मते तावत् ज्ञानं भवति चेदपि ब्रह्मनिष्ठा क्वचित् न भवति। निष्ठाभावः पुराणेषु वर्णितः। एवं निष्ठाशब्दस्य ज्ञानमात्रार्थग्रहणे पुराणादिशास्त्रविरोधः स्फुटो भवितुमर्हति इति कारणेन तमर्थं परित्यज्य अनुरक्तिरित्यर्थः स्वीकार्यः तथा च ब्रह्मसंस्थेति शब्दस्य ब्रह्मनिष्ठारूप भक्तिरित्येवार्थः। एतद्द्वारैव मोक्षो भवति। एतं विषयं प्रमाणयितुं नारायणतीर्थाः'**तन्निष्ठस्यमोक्षोपदेशादिति**'[68] सूत्रमुद्धरन्ति। तत्सूत्रगतं निष्ठापदमपि संस्थावाचकमिति तेषामाशयः। तेन च सूत्रेण ब्रह्मनिष्ठ एव मोक्षं विन्दतीति कथितम्। छान्दोग्योपनिषदि 'स आत्मा' इति आत्मानं प्रक्रम्य 'तत्त्वमसि श्वेतकेतो' इति श्वेतकेतोः चेतनस्य आत्मरूपताम् उपदिश्य पुनः 'अथ सम्पत्स्ये' इति प्रारब्धनाशानन्तरं तस्यैव मोक्षोपदेशः कृतः एतत्प्रमाणेनापि ब्रह्मसंस्था शब्दस्य ब्रह्मनिष्ठेत्यर्थः सा च निष्ठा भक्तिरूपैवेति भक्तिशास्त्रसिद्धान्तः। अत्र एवं शङ्का भवितुमर्हति—संस्था नाम अन्यवृत्तिनिरोधेन तद्वृत्तिरूपैव खलु, एवञ्च सा वृत्तिः ज्ञानं भवितुमर्हति इति शङ्काभवति चेत् नारायणतीर्थाः तत् समाधित्सवः व्याख्यान्ति यद् वृत्तिर्ज्ञानरूपा नास्ति। रागस्य अवान्तरजातिरेव वृत्त्यन्तरनिरोधिनी भवति न च ज्ञानम् इति अन्वयव्यतिरेकाभ्यां रागस्य अवान्तरजातेरेव तत्र संस्थाशब्दवाच्यत्वम्।

ब्रह्मसंस्था शब्दस्य परिव्राट् इत्यर्थोऽपि न भवतीति नारायणतीर्थाः स्पष्टयन्ति। कैश्चित् ब्रह्मसंस्थाशब्दस्य परिव्राट् इत्यर्थो दर्शितः। तेषां मतमित्थम् –छान्दोग्ये त्रयोधर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति आरभ्य प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मान–मवसादयन्, त एते सर्वे पुण्यलोका भवन्ति इति उपक्रमानन्तरं ब्रह्मसंस्थोऽमृततत्त्वमेति इति धर्मत्रित्वं व्यवस्थापयितुं त्रयोधर्मस्कन्धाः इति वाक्येन आश्रमत्रयं प्रतिज्ञातम्। तत्र यज्ञशब्देन गृहस्थाश्रमः अध्ययनशब्देन ब्रह्मचर्याश्रमः दानशब्देन च वानप्रस्थाश्रमः ग्राह्यः। पुनश्च परिशेषन्यायेन ब्रह्मसंस्थाशब्दस्य परिव्राट् संन्यासीत्येव अर्थो भवति। एवम् अथ व्युत्थाय सर्वैषणाभ्यः ब्रह्मचर्यां चरन्तीति वेदान्तवाक्यानुसारं सर्वैषणापरित्यागरूपः संन्यास एव ब्रह्मसंस्थाशब्दस्यार्थः तस्यैव हि ब्रह्मसाक्षात्कारस्य अङ्गरूपेण विहितत्वात् ब्रह्मसंस्थाशब्दस्य स एव अर्थो युक्तः तथा च परिव्राडेव मोक्षमाप्नोतीति सूत्रस्यास्य अर्थो भवति इति केषाञ्चन मतं नारायणतीर्थैः पुरस्कृतं खण्डितञ्च।

ब्रह्मसंस्थशब्दस्य संन्यासीति योऽर्थो दर्शितः सः नोपपद्यत इति नारायणतीर्थाः तन्मतं खण्डयन्ति। यतः ब्रह्मसंस्थाशब्दस्य संन्यासीत्यर्थे प्रमाणं नास्ति तथैव रूढिरपि न दृश्यते। अपि च संन्यासाश्रमप्राप्तिमात्रेण मोक्षो भवतीति नास्ति। अतः बाधितत्वदोषोऽपि भवति। एवं मानाभावः, रूढ्यभावः, बाधितत्त्वञ्चेति दोषत्रयेण मतमिदं न ग्राह्यमिति नारायणतीर्थानाम् आशयः। ब्रह्मचर्यादि–आश्रमवर्तिषु सत्कर्मशालिषु यस्य ब्रह्मसंस्था भवति स एव अमृतो भवतीति सूत्रार्थोऽत्र विवक्षितः अतः स एव उपपद्यते। एतावदेष न, संन्यासिनामेव ब्रह्मनिष्ठत्वकथने गृहस्थानां तदभावः कथितो भवेत् परन्तु गृहस्थानामपि ब्रह्मनिष्ठायां

किमपि बाधकं नास्ति। एवमेव कर्मत्यागमात्रञ्च नात्र विवक्षितम्। त्रयोधर्मस्कन्धाः इति वेदान्तवाक्ये यद्यपि त्रयाणामेव उल्लेखो दृश्यते तथापि तैः त्रिभिः चतुर्णामपि उपलक्षणं ज्ञेयम्। एवञ्च तत्तत् – आश्रमिणः ये केचित् पुण्यभाजो ब्रह्मसंस्थाः भवन्ति ते अमृतत्वं विन्दन्ति इति तात्पर्यम्। एवं सर्वेषु पुण्यवत्सु पुण्यलोकभाक्षु सत्सु तेषु यः कश्चन ब्रह्मसंस्थः स्यात् स एव अमृतत्वभाक् भवतीति भावः। यतः मन्दप्रज्ञस्यापि यथा कालान्तरकृतेन शास्त्राभ्यासेन पटुप्रज्ञत्वं भवति तथा क्रमेण पुण्यलोकभाजान् अपि अमृतत्वप्राप्तिर्भवितुमर्हति अतः ब्रह्मसंस्था इति यौगिकं पदं केवलसंन्यासिपरकं नास्ति इति सूत्राशयं विषृण्वन्ति नारायणतीर्थाः।[69]

विषयेऽस्मिन् पुनश्च काचिच्छङ्का भवितुमर्हति। क्वचित् संस्थाशब्दस्य मर्यादा इत्यपि अर्थो गृहीतः। संस्था तु मर्यादाधारणास्थितिः इति कोषोऽत्र प्रमाणम्। एवञ्च '**विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम्**'[70] इत्यपि साहित्यप्रयोगः साधीयान् भवति। अतः संस्थाशब्दस्य मर्यादेत्यर्थग्रहणेन ब्रह्मसंस्थाशब्दस्य भक्तिरित्यर्थो न भवति अतः भक्तिः न कैवल्यहेतुरिति शङ्काकृतां मतम्।[71]

एतेषां मतानुसारं भक्तेः कैवल्यसाधनत्वस्वीकारे विकल्पो भवितुमर्हति। कीदृशी भक्तिः कैवल्यहेतुः, निर्गुणविषया सगुणविषया वा? निर्गुणविषयाभक्तिः कैवल्यहेतुः भवितुं नार्हति यतः दुःखहेतुरूपस्याज्ञानस्य निवृत्तिः ज्ञानैकसाध्या इति खलु सिद्धान्तः। कस्यापि शुक्तिविषयकं ज्ञानं शुक्तिविषयकस्य अज्ञानस्य निवृत्तौ भक्तिं द्वाररूपेण नापेक्षते अज्ञाननाशस्यैव मोक्षरूपत्वात्। अज्ञाननाशस्य च ज्ञानसाध्यत्वात् न भक्तिर्मोक्षहेतुः। एवमेव सगुणविषयकभक्तिरपि

साक्षान्न मोक्षहेतुः यतः सगुणभक्तिः चित्तशुद्ध्यर्थमेव ग्राह्या अतः भक्तिर्न मोक्षहेतुः अपि तु ज्ञानम् इति तेषां मतम्।

यद्यपि **'तमेव विदित्वा अतिमृत्युमेति'**[72] इत्यादिश्रुति वाक्यानि ज्ञानादेव मोक्षं वर्णयन्ति तथापि मुक्तिं प्रति ज्ञानमुपक्षीणमिति सूत्रकाराणामाशयः **'तयोपक्षयाच्च'**[73] इति सूत्रेण बोध्यते। तया अर्थात् भक्त्या मुक्तिं प्रति ज्ञानमुपक्षीणं भवति इति कारणेन ज्ञानं मोक्षं प्रत्यन्यथा सिद्धम्। **'यं सर्वे देवा नमन्ति'**[74] इत्यादि श्रुतयः भक्तेः कारणरूपेण ज्ञानं प्रतिपादयन्ति अतः ज्ञानं मोक्षं प्रति भवति अन्यथासिद्धम् अत्र गीतावाक्यमपि, प्रमाणम् – 'ज्ञानञ्च भक्तिं जनयित्वैव मोक्षजनने समर्थम्' इति भक्तिशास्त्रसिद्धान्तः। तमेव विदित्वा इति वाक्ये भक्तिद्वारैव ज्ञानं मोक्षसाधनमिति तात्पर्यम्। कर्मादिकं तु न तथापि इति च वाक्यार्थो ग्राह्यः। तर्हि तस्मिन्वेदान्तवाक्ये भक्तिरित्यर्थः कस्यशब्दस्य गृह्यते इति शङ्कायाम् अतिमृत्युमेति इत्यत्र अतिमृत्यु शब्द एव भक्तिपर इति नारायणतीर्थाः भक्तिशास्त्रसिद्धान्तं विवृण्वन्ति। चतुर्विधा भजन्ते मामित्यत्रापि ज्ञानिनां भक्तावेवाधिकारः प्रतिपादितः। अत्र नारायणतीर्थाः अपरं विशेषमपि विवृण्वन्ति यत् ज्ञानादज्ञाननाशो भवति चेदपि स अज्ञाननाश एव मोक्षरूपेण न ग्राह्यः। सुखदुःखाभाव एव मोक्षो नास्ति स्वतः अपुरुषार्थत्वात् किन्तु भगवद्प्रीतिरूपाभक्तिरेव पुरुषार्थरूपा यतः तत्रैव स्वप्रकाश–निजसुखसंवित्–आलिङ्गनं भवति। अयमेवार्थः सूत्रकाराभिप्रेतः।

अत्र नारायणतीर्थाः ब्रह्मावाप्तिमपि पुरुषार्थरूपेण न स्वीकुर्वन्तः विशेषमेव वर्णयन्ति –

ब्रह्मावाप्तिरपि न पुरुषार्थः अपि तु विजातीय प्रमोपलक्षिता भक्तिरेव पुरुषार्थरूपा यतः परमेश्वरकोपनेन स्वस्य अज्ञानधारा वृद्धौ विविधबन्धनानि भवन्ति अतः परमेश्वरभजनमेव तत्कोपनिवारणद्वारा तत्प्राप्तिहेतुः इति भक्तिशास्त्ररहस्यम् अतः विजातीयप्रेमैव पुरुषार्थः। ज्ञानमपि विजातीय प्रेमजननद्वारा मोक्षहेतुर्भवितुमर्हति। तस्मिन् प्रेम्णि वर्तमानं वैजात्यमेव तत्त्वज्ञानजनकतावच्छेदकम् इत्यत्र लाघवं भवति।

विषयेऽस्मिन् पुनश्च शङ्का दर्श्यते यत् अज्ञाननाश–समनन्तरमेव मुक्तिर्भवति इति कारणेन प्रेमोपलक्षितानन्दस्य कथं वा पुरुषार्थता इति? एतत् समादधानैः नारायणतीर्थैः कथ्यते यत् यथा वेदान्तशास्त्रे अज्ञाननिवृत्तेः निवृत्ति उपलक्षितायाः पुरुषार्थत्वं तथा भक्तिशास्त्रे प्रेमोपलक्षितानन्दस्य पुरुषार्थत्वम् इति स्पष्टीकृत्य पुनश्च विवृतं यत् मीमांसाशास्त्रे मोक्षावस्थायां शरीराद्यभावेऽपि सुखसाक्षात्कारः स्वीक्रियते तथा भक्तिशास्त्रे मोक्षावस्थायां प्रेमसद्भावे बाधकं नास्ति। एतावता अद्वैतभङ्गोऽपि न भवति यतः द्वयोरेकतरस्य विषमसत्ताकत्वे अद्वैतभङ्गो न इति नियमः। एतादृशे नियमे अस्वीकृते विषमसत्तावतः घटादेः सत्त्वकारणेन अद्वैतभङ्गो भवेत् अतः मुक्तिकालेऽपि प्रेमरूपानन्दः भवतीति अबाधितत्वात् स एव पुरुषार्थ इति स एव ज्ञानादधिक इति च भक्तिशास्त्रसिद्धान्तः।[75]

मोक्षस्य सुखस्वरूपत्वमेवं साधितम्। परन्तु न्यायशास्त्रे दुःखाभावस्यैव मोक्षरूपत्वं स्वीक्रियते –'**आत्यन्तिकी दुःखनिवृत्तिरेव मुक्तिः**'[76] इति खलु तेषां मतम्। परन्तु मतमेतद् न साधीयः इति नारायणतीर्थाः तस्य खण्डनं कुर्वन्ति। न्यायशास्त्रे तावत् दुःखाभावे सुखस्य व्यवहारः केवलमौपचारिकः यथा भारापगमे अहं सुखी इति सर्वोऽपि व्यवहरति

तथा दुःखनाशे अहं सुखी इति भानमपि औपचारिकमिति नैय्यायिकानामाशयः तदत्यन्तविमोक्षोऽपवर्गः'[77] इत्यस्य सूत्रस्य भाष्ये वात्स्यायनमहर्षिणा विवृतः। नारायणतीर्थास्तावत् मतस्यास्य खण्डनं कुर्वन्तः कथयन्ति–दुःखाभावापेक्षया सुखस्यैव पुरुषार्थत्वमुचितम्। दुःखाभावमात्रे कस्यापि प्रवृत्तेरभावात् सर्वपुमर्थरूपेण भक्तिरेव ग्राह्या इत्यतः ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र ब्रह्मसंस्था शब्दस्य भक्तिपरकत्वं ज्ञेयमिति नारायणतीर्थाः विवृण्वन्ति।

एवं पूर्वपक्षनिरसनपुरस्सरं नारायणतीर्थाः शाण्डिल्यसूत्राधारेण ब्रह्मसंस्थाशब्दस्य भक्तिरित्यर्थं प्रतिपाद्य भक्तिद्वारैव मोक्षो भवतीति निरचिन्वन्।

## नरायणतीर्थानां मते भक्तौ श्रुतिप्रामाण्यम्

'**भक्तिः प्रमेया श्रुतिभ्यः**'[78] इति शाण्डिल्यभक्तिसूत्रम् प्रतिपादयति। अर्थात् भक्तिरपि श्रुतिप्रतिपादिता इति तानि च श्रुतिवाक्यानि प्रयत्नतःसमाहर्तव्यानीति च बोध्यते। सूत्रस्यास्य महत्त्वं निराकर्तुमशक्यं यतः भक्तिपारम्यबोधकभक्तिसूत्रग्रन्थस्य प्रामाण्यमपि भक्तेः प्रामाण्यसाधनेन सिद्धं भवति। सूत्रमिदं स्वप्नेश्वरभाष्ये नोपलभ्यते। अत एतदनुमीयते यत् स्वप्नेश्वरकाले समुपलब्धः भक्तिसूत्रग्रन्थः नारायणतीर्थानां भाष्यस्य मूलग्रन्थश्च भिन्नौ स्याताम्। यतः नारायणतीर्थाः एतादृशानि सूत्राणि व्याख्याय सूत्रार्थं विवृण्वन्ति। अत्र च प्रसङ्गे भक्तिपारम्यगानेन भक्तेः प्रामाण्यं सिद्धं न भवेत् प्रत्युत श्रुतिप्रमाणदर्शनेन भक्तेः स्वीकार्यता अधिका स्यात् इति विचिन्त्य आचार्यैःसूत्रमिदं व्याख्यातमिति भाति। आचार्याः सूत्रस्यास्य

स्पष्टीकरणार्थं यावतीः श्रुतीः अदर्शयन् तावतीनामध्ययनेन तेषां श्रुतिवैदुष्यमपि दृग्गोचरं भवति।

यजुर्वेदे आत्मदर्शनोपायत्वेन श्रवणादीनाम् उपायानां विधिस्तावत् '**आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्च**'[79] इत्यनेन वाक्येन क्रियते। श्रवणमनन–निदिध्यासनैः आत्मसाक्षात्कारः कर्तव्यः इति वाक्येनैकेन बुध्यते। तथा भक्तिस्वरूपबोधिकाः श्रुतयः काः इति जिज्ञासा भवति। तासामभावे भक्तेः प्रामाण्यमेव असिद्धं भवेत् अतः नारायणतीर्थाः विस्तरशःश्रुतिवाक्यानि उदाहृत्य भक्तेः प्रामाण्यमुपस्थापयन्ति।

**ज्ञानापेक्षया भक्तेः श्रेष्ठत्वम्**

आत्मसाक्षात्कारस्य उपायरूपेण स्वीकृतेषु साधनेषु भक्तिः; ज्ञानं; ध्यानं; कर्म; उपासना च इत्येतानि प्रसिद्धानि सन्ति। तत्र विभिन्नसंप्रदायेषु एकैकस्य साधनस्य महत्त्वं प्रतिपादितमस्ति। ईश्वरं प्रति भक्तिर्वा ईश्वरस्य ज्ञानं वा मोक्षसाधनम् इत्यत्र विवादो वर्तते। यं प्रति भक्तिः प्रतिपाद्यते तस्य ज्ञानं विना तस्यानुपपन्नत्वात् ज्ञानमेव भक्त्यपेक्षया श्रेष्ठमिति केषाञ्चन मतम्। ईश्वरं प्रति भक्तौ कृतायां ईश्वरानुग्रहेण भवतीति परेषां मतम्। एवं भक्तिज्ञानयोः विषये भवति विवादाः। ईश्वरस्य स्वरूपज्ञानं विना ईश्वरं प्रति भक्तिरशक्येति सुस्पष्टमेव। कस्यापि गुणस्वभावज्ञानं विना तं प्रति कथं वा प्रीतिरुत्पद्येत अतः भक्तेरपेक्षया ज्ञानमेव श्रेयस्करमिति योग्यं वचः। परन्तु भक्तिसंप्रदाये नेदं स्वीकृतमस्ति मतम्। स्वव्याख्याने नारायणतीर्थाः ज्ञानापेक्षया भक्तेः श्रेष्ठत्वं प्रत्यपादयन्।[80]

ज्ञानादेव मोक्षः इति वेदान्तिनां मतम्। '**तमेव विदित्वा अमृतत्त्वमेति नान्यः पन्थाः अयनाय विद्यते**'[81] इत्येतद् उपनिषद् वाक्यं ज्ञानमेव मोक्षसाधनं

ब्रवीति। एवमेव '**केवलादेव ज्ञानात् मोक्षः**'[82] इत्यादीनि भाष्यकारादीनां वचनानि ज्ञानस्यैव मोक्षसाधनत्वं संस्थापयन्ति। एवं सति भक्तिः ज्ञानस्याङ्गमिति भाति। परन्तु '**तया उपक्षयाच्च**'[83] इत्यनेन सूत्रेण शाण्डिल्यमहर्षिः भक्तेरेव परमत्वं ज्ञानस्य च तदङ्गत्त्वं प्रमाणयति तथाहि –'**यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च**'[84] इत्यादीनि श्रुतिवाक्यानि भक्तिं प्रति ज्ञानस्य हेतुत्त्वं प्रतिपादयन्ति तेन च मोक्षं प्रति ज्ञानमन्यथासिद्धत्वमेव स्यात्। तथैव भगवद्गीतासु '**पुरुषः सः परः पार्थ भक्त्या लभ्यस्त्वनन्यया**' इत्यादिवाक्यैः मोक्षस्य भक्तिमात्रलभ्यत्त्वं प्रतिपादितम्। '**तमेव विदित्वा––**' इ. श्रुतेरर्थस्तावत् भक्तिद्वारा ज्ञानमेव मोक्षजने समर्थं न कर्मादिकमित्येव। 'अतिमृत्युमेति' इत्यस्य च मोक्ष इति नार्थः अपि तु भक्तिरित्येव। 'नान्यः पन्थाः' इत्यस्य भक्तिं विना अन्योपायः नास्तीत्यर्थः भगवदगीतासु च ज्ञानीनामपि भक्तावेव अधिकारो भवतीति स्पष्टं प्रतिपादितम्।[85]–

**'चतुर्विधा भजन्ते मां –– भरतर्षभ'।।**[86]

अस्मिन् श्लोके मां चतुर्विधाः पुरुषाः भजन्ते इत्यादौ कथयित्वा तेषु ज्ञानीनां गणना कृता। एतेन ज्ञानिनश्च भक्तिं कुर्वन्ति इति स्पष्टमेव ज्ञायते। अत्र भक्तौ चत्वारः अधिकारिणः आर्ताः जिज्ञासवः अर्थार्थिनः ज्ञानिनः च इति। तेषु ज्ञानिनस्तु भक्तिफलं किमित्याकाङ्क्षायां तस्य निष्कामत्वे फलान्तरस्य अभावात् भक्तिरेव ज्ञानफलमिति स्वीकर्तव्यं भवति। यतः आर्तस्य आर्तिनिवृत्तिः, जिज्ञासोः ज्ञानं, अर्थार्थिनः अर्थः इति वाक्यसामर्थ्यात् ज्ञायते। निष्कामस्य ज्ञानिनस्तावत् एतादृशफलासम्भवेन भक्तिरेव फलं वाच्यम्। किं वा सहेतुकस्य अस्य संसारस्य निवृत्तिरेव ज्ञानीनः ज्ञानस्य फलमिति तद्भक्तिद्वारेति च

वक्तव्यम्। शुक्तौ रजतभ्रमादिस्थले अधिष्ठानज्ञानं भ्रमनिवर्तकं न भवति अतः तत् भक्तिं न द्वारीकरोति परन्तु परमात्मज्ञानं दुःखनिवर्तकं भवति इति कारणेन तदीया सेवा उपादेया। वस्तुतः ज्ञानादेव अज्ञाननाशो भवति इति सत्यं परन्तु अज्ञाननाश एव मोक्षो न भवति। यतः अज्ञाननाशः सुखाभावो वा दुःखाभावो वा नास्ति। तस्मात् सः स्वतः पुरुषार्थो न भवति तेन कारणेन भक्तिरेव परमपुरुषार्थः। सैव सुखरूपेति स्वकृतत्वात् ज्ञानमपि तदङ्गमेव।

'**तया उपक्षयाच्च**' इत्यनेन सूत्रेण भक्तिरेव ज्ञानापेक्षया श्रेयस्तमा इति प्रतिपादितम्। ज्ञानस्य च मोक्षं प्रति अन्यथासिद्धत्वात् भक्तेः अङ्गत्वमेव। एतद् विवृत्य ततः ब्रह्मप्राप्तेरपि स्वतः पुरुषार्थत्वं नास्तीति, विजातीय प्रेमोपलक्षितायाः भक्तेरेव पुरुषार्थत्वमिति स्पष्टीकुर्वन्ति नारायणतीर्थाः। भक्त्यभावे भगवतः कोपनेन जीवस्य अज्ञानधाराः विवर्धन्ते। ततश्च विविधानि बन्धनानि भवन्ति अतः भगवद्भक्त्यभावः एव विविधानर्थहेतुः इति प्रतिपादयन्ति नारायणतीर्थाः अतः भगवतः प्रसादनेन तत्कोपापनयने भक्तस्य आवरणभङ्गो भूत्वा तद्द्वारा पुरुषार्थप्राप्तिर्भवति इति हेतोः भजनमेव समादरणीयमिति आचार्याणां मतम्। अत्र च प्रमाणत्वेन श्रुतिस्मृतिवाक्यानि आचार्यैरुदाहृतानि। श्रुतिस्तावत् –

'**तस्य अभिध्यानात् योजनात् तत्त्वभावात्**'[87] इति तथा ब्रह्मसूत्रमपि '**पराभिध्यानात् तु तिरोहितं ततोऽस्य बन्धविपर्ययौ**'[88] इति च अमुमेव विषयं विषदयतः। यतः भजनम् अनर्थप्रतियोगी अतः अनर्थस्य नाशाय भजनमेव समादेयमिति श्रुतिस्मृतिवाक्यार्थः। यतः प्रागभावस्य नाशः प्रागभावस्य प्रतियोगिरूपः इति स्वीकरणेन अनर्थप्रतियोगिनः भजनस्य समाश्रयणमेव

वरमिति मतम्। अर्थात् विजातीय प्रेमैव पुरुषार्थः। यद्यपि ब्रह्मप्राप्तिः स्वतःसिद्धेति कारणेन ज्ञानस्य निष्प्रयोजनत्वं शङ्क्यते तथापि ज्ञानं न व्यर्थं तस्य तादृश भजनमेव फलमिति स्वीकृतम्। अतोऽपि भजनोपलक्षितः आनन्दः तत्त्वज्ञानस्य कार्यं न भवति प्रत्युत अज्ञाननाश एव तत्त्वज्ञानस्य कार्यत्वेन स्वीकरणीयो भवति। एतेन गौरवदोषोऽपि निरस्तो भवति। एतस्यापेक्षया भजनगतवैजात्यमेव तत्त्वज्ञानजन्यत्वे अवच्छेदकमिति स्वीकारे लाघवम् इति नारायणतीर्थाः दर्शयन्ति।

अत्र भजनस्य पुमर्थत्वे कश्चिदाक्षेपो भवितुमर्हति यथा – अज्ञाननाशात् समनन्तरमेव जायमानायां मुक्तौ जन्यत्वं नास्ति इति कारणेन कथङ्कारं भक्तिः पुरुषार्थः स्यात् इत्याक्षेपस्य स्वरूपम्।[89]

नारायणतीर्थाः एतमाक्षेपं समादधानाः विवृण्वन्ति यत् वेदान्तसम्प्रदाये तावत् पाकक्रियानाशे पाचकत्वनिवृत्तिः यथा भवति तथा अत्रापि निवृत्तिनाशे निवृत्त्युपलक्षितमेव पुरुषार्थो भवितुमर्हति। तथैव भक्तिसंप्रदाये भक्तेरपि आनन्दरूपत्वात् पुरुषार्थतत्त्वं सुवचं भवति इति। एवमेव मीमांसासंप्रदाये तावत् शरीराद्यभावेऽपि मुक्तौ सुखसाक्षात्कारः स्वीकृतः। तत्र शरीरादेः सावच्छिन्नज्ञानंप्रत्येव कारणत्वं न तु निरवच्छिन्नज्ञानं प्रति अतः निरवच्छिन्नज्ञाने बाधकं नास्ति इति मीमांसासंप्रदाये यथा स्वीक्रियते तथा भक्तिसंप्रदायेऽपि मुक्तौ प्रेमसद्भावे बाधकं न भवति। एतेन अद्वैतभङ्गोऽपि न भवति। यतः समसत्ताकयोः द्वयोः सत्त्वे अद्वैतभङ्गः अत्र तु द्वयोः विषमसत्ताकत्वेन नाद्वैतभङ्गः। यदि मुक्तौ तादृशः अद्वैतभङ्गः विवक्षितः तर्हि व्यवहारकालेऽपि घटादिना अद्वैतभङ्गः कथनीयो भवेत्। व्यवहारकाले

घटादिः व्यावहारिकसत्तावान् ब्रह्म च पारमार्थिकसत्तावत् इत्युभयोः विषमसत्ताकत्त्वम् अद्वैतेऽपि स्वीक्रियते।

एतस्मात् मुक्तिकालेऽपि भजनं शक्यम्। तच्च अबाधितम्। तदेव तत्त्वज्ञानसाध्यम् सुखस्वरूपं तदेव पुरुषार्थः इति हेतोः तस्यैव भजनस्य ज्ञानादपि अधिकत्वम्। पुनश्च भक्त्यपेक्षया ज्ञानं न मुख्यमिति स्वयं सूत्रयामास शाण्डिल्यमहर्षिः। '**तद्वतः प्रपत्तिशब्दाच्च न ज्ञानम् इतरप्रपत्तिवत्**'[90] इत्यनेन सूत्रेण ज्ञानवतः अपि प्रपत्तिशब्दात् ज्ञानं न मुख्यम् भक्तिरेव मुख्येति प्रतिपाद्यते। अत्र च ज्ञानं भक्तेर्भेदरूपेण प्रदर्श्यते। भगवद्गीतास्वपि–

'**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते**'[91] इत्यनेन ज्ञानफलरूपेण प्रपत्तिरेव प्रदर्शिता। ज्ञानं प्राप्य बहूनां जन्मनामनन्तरं सः जीवः मां प्रपद्यते शरणं व्रजति इत्यस्य अर्थः। अत एव '**मद्भक्तो भव**', '**यो मे भक्तस्स मे प्रियः**' इ. वचनैः ज्ञानापेक्षया भक्तेरेव श्रेष्ठत्वं निगदितमस्ति।

विषयेऽस्मिन् कश्चिदाक्षेपो भवितुमर्हति तद्यथा केवलज्ञानं भक्तिर्न भवति चेदपि द्रवीभावपूर्वकं ज्ञानं भक्तिर्भवितुमर्हति इति। परन्तु नारायणतीर्थमतानुसारम् आक्षेपोऽयं निरर्थको यतः कस्मिन्नपि रूपे वा भवतु ज्ञानं भक्तिर्न भवति। भक्तिसंप्रदाये तावत् ज्ञानं भक्तिसाधनमेव अपरञ्च द्रवीभावपूर्वकं ज्ञानं भक्तिरित्युक्ते द्रवस्य सविषयत्वं नास्ति इति कारणेन ज्ञानं भक्तिर्नास्ति। द्रवीभावः कथञ्चित् रससमकालिको भवितुमर्हति अतः प्रेम्णि अंतर्भवति ज्ञानं तु तादृशं नास्ति इति कारणेन तस्मिन्नान्तर्भवति। एवमेव श्रुतिस्मृतिपुराणवाक्येभ्यः अवगम्यते।

अत्र यदि पुराणवचनानुसारं कश्चनविरोधः प्रदर्शितः यथा –

**'महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते'।**[92] अत्र महत्त्वबुद्धिः भक्तिः इत्युक्त्वा ज्ञानस्यैव भक्तिरूपत्त्वं कथितम्। यदत्र ज्ञानं स्नेहपूर्णम् इत्येव विवक्षितं यथा 'स्वर्गकामो यजेत' इत्यत्र स्वर्गकामस्य यागे अधिकारः तदुत्तरं स्वर्गस्य अधिकारिविशेषणत्वं च यथा स्वीकृतं तथा अत्रापि स्नेहपूर्वकं ज्ञानमित्यवधार्यम्। अत एव परमेश्वरे स्नेहविशेषरूपायाः प्रीतेः कृते आदौ शास्त्रादीना परमेश्वरस्य माहात्म्यज्ञानं सम्पाद्यम्। तज्ज्ञानमपि भक्तिसाधनत्वात् भक्तिरित्येवोच्यते। तस्मादेव तादृशम् आवरणं नश्येद् येन भक्तिः तत्फलञ्च प्रतिबद्धे भवतः। एवञ्च प्रपत्तिशब्दस्तत्रन प्राप्त्यर्थकः, किन्तु भक्तिपर इत्यनेन ज्ञानं न मुख्यं, प्रपत्तिरेव मुख्येति प्रतिपादितम्। नारायणतीर्थाः नामनुसारं ज्ञानमेव, भक्तिद्वारा कैवल्यहेतुरिति। 'नान्यः पन्थाः' इत्यनेन व्यापारभूताया भक्तेः साधनत्वं न व्यवच्छिद्यते किन्तु कर्माऽऽदेः यथा चक्षुषैव पश्यतीत्युक्ते न सम्बन्धस्य व्यवच्छेदः, किन्तु प्रमाणान्तरस्येति[93] इत्थं ज्ञानं भक्तिद्वारैव कैवल्यहेतुरिति प्रतिपाद्य तस्या भक्त्यङ्गत्वं निदर्शयन्ति– **'दृष्टत्वाच्चं,**[94]**'भक्त्या जानातीति चेन्नाऽभिज्ञया साहाय्यात्**[95] इत्येताभ्यां सूत्राभ्याम्।

एवञ्च भक्तिसंप्रदाये ज्ञानस्य माहात्म्यमनुपश्यतः ज्ञानमपि भक्तिसाधनमित्येव स्वीकार्यम्। तत्रापि साधनभक्तिः ज्ञानं जनयतीति तस्माज्ज्ञानात् पराभक्तिरुदेतीति भक्तिसंप्रदायरहस्यं नारायणतीर्थैः स्वव्याख्याने प्रकाशितम्।

**योगापेक्षया भक्तेः श्रेष्ठत्वम्**

ज्ञानं भक्तेरङ्गमिति दृढं प्रतिपाद्य चित्तवृत्तिनिरोधरूपस्य योगस्यापि भक्तेरङ्गत्वमेव तदनुकूलज्ञानजननद्वारा, इति भक्तिशास्त्रे

स्फुटमभिहितं तदेव विशिष्य प्रतिपिपादयिषवः नारायणतीर्थाः बहुधा योगस्यापि भक्तेरङ्गत्वं व्यवृण्वन् ।

ते वदन्ति सूत्रकाराणां मते – यद्यपि भगवद्गुणगणश्रवणात् माहात्म्यज्ञानेनैव भक्तिरुत्पद्यते तथापि योगाभ्यासेन सा दृढा भवत्यतः दाढ्यर्थं योगमपेक्षमाणायाः भक्तेः योगः अङ्गमेव भवति।[96] किन्तु नारायणतीर्थानां मते भक्तेः दाढ्यं ज्ञानवैराग्ये अपेक्षेते।[97] ज्ञानार्थमपरवैराग्यमावश्यकमस्ति अपरवैराग्यार्थञ्च अष्टाङ्गयोगः। अपरवैराग्येन ज्ञान–प्राप्त्यनन्तरमेव परवैराग्यं प्राप्यते तेन च भक्तिः। इत्थं क्रमं दर्शयित्वा योगं प्रधानमङ्गं मन्यमानानां काश्चनाशङ्काः उपस्थाप्य दूषयित्वाच भक्तेः योगापेक्षया श्रेष्ठत्वं नारायणतीर्थैः सिद्धीकृतम् तदित्थम् –

**आशङ्काः**

1.. योगः प्रधानाङ्गमस्ति अतः तस्य अङ्गाङ्गित्वं कथम्?[98]

2. 'ईश्वरप्रणिधानाद्वा' इत्यस्मिन् सूत्रे भक्तिः योगस्याङ्गरूपेण प्रदर्शिता, अतः तस्याः मुख्यत्वं कथम्।[99]

3. रागरूपायाः भक्तेः योगशास्त्रादौ क्लेशेषु गणनेन तस्याः हेयत्वमापद्यते,[100]

4. भगवद्वचने 'आधिक्य'शब्दात् नार्थवादत्वं द्योतते[101] अपि तु केवलाङ्गानुष्ठाने– क्लेशाधिक्यमेवास्ति इति।

एताः आशङ्काः क्रमशः समादधानाः नारायणतीर्थाः वदन्ति, यथा प्रयाजः वाजपेयस्याङ्गं तदङ्गदीक्षणीयादेरप्यङ्गं तथैव योगानुष्ठानेन ज्ञानं

सम्पाद्य तेन ज्ञानेन भक्तिरुत्पद्यते इत्यनया दृष्ट्या योगः भक्तेरङ्गं तदङ्गस्य ज्ञानस्यापि अङ्गमित्यत्र न कोऽपि विरोधः।[102]

**'ईश्वरप्रणिधानाद्वा'** इत्यस्मिन् सूत्रे यत् प्रणिधानमुक्तं तद् गौणभक्तिरेव। अतः सा गौणभक्तिः योगमुपकरोति योगश्च ज्ञानमुपकरोति तच्च मुख्यभक्तिमित्येवं द्रष्टव्यम्।[103]

यद्यपि योगशास्त्रादौ रागरूपा भक्तिः क्लेशेषु गण्यते तथापि तस्याः हेयत्वं नापद्यते यतः संसारानुगुणो रागः हेयः न मोक्षानुगुणः। यथा सत्सङ्गः हेयत्वं नापद्यते, दुःसङ्गतिरेव तथैव संसारोद्धारकपरमेश्वरविषयकरागरूपा भक्तिः हेयत्वं न प्राप्नोति अपि तु उत्तमत्वं प्राप्नोति।[104]

यदुक्तं 'तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात्' नार्थवादत्वं प्रकटीभवति तस्मिन्विषये नारायणतीर्थाः वदन्ति, अत्र अस्मिन् भगवद्वाक्ये –

**'तपस्विभ्योऽधिको योगी–––स मे युक्ततमो मतः।।'**[105]

इत्यत्र कर्मिज्ञानियोगिभ्यः अपि भक्तस्य आधिक्यं दर्शितम् अद्वैतवेदान्तानुसारम् अत्र ज्ञानी इति परोक्षज्ञानी इत्यर्थः, योगश्च अपरोक्षज्ञानपूर्वभाविनः अस्ति तस्माद् योगस्य ज्ञानापेक्षया आधिक्यं न सम्भवति। अत्र तपइत्यादीनां विशेषणानामपेक्षया विशेष्याणामाधिक्यं ज्ञायते यतः अङ्गस्य मुख्यादाधिक्यं न सम्भवति अतः योगः ज्ञानस्याङ्गं ज्ञानञ्चभक्तेरङ्गमिति विज्ञाय भक्तिः प्रधाना इति सिध्यति। प्रश्ननिरूपणाभ्यामपि भक्तेरेवाधिक्यसिद्धिर्भवति इति नारायणतीर्थाः प्रतिपादयन्ति। तेषां मते 'श्रुतं ह्येव मे भवादृशेभ्यस्तरति शोकमात्मवित्' इति प्रश्नेन 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नाऽऽत्मरत

आत्ममिथुन आत्माऽऽनन्दः स स्वराड् भवति' इत्युत्तरेण मोक्षहेतुत्वेन भक्तेराधिक्यसिद्धिर्भवति। ते प्रतिपादयन्ति यद्–

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते' इत्यादि अर्जुननिरूपणे 'सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' इ. भगवतः समाधानेन निर्गुणसन्धानं सफलमुक्त्वा, 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः' इत्यादिना सगुणभक्तिमुपक्रम्य', 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्यादिना तत्फलमुक्तम्, अत्र भक्तेः प्राधान्यनिश्चयश्च भगवता कृत इति ज्ञातव्यम्। निर्गुणोपासना या भगवता प्रोक्ता सा तु निर्गुणोपासनया निर्गुणसाक्षात्कारतदनुरागद्वारा मोक्षहेतोर्दुःसाध्यत्वापेक्षया सगुणोपासना सुसाध्या अस्ति इति सगुणोपासनायाः आधिक्यं भगवता निर्दिष्टम्।[106]

एवञ्च सर्वाः आशङ्काः समाधाय नारायणतीर्थाः भक्तेः योगापेक्षया श्रेष्ठत्वं समर्थितवन्तः।

**भक्तावधिकारी**

ईदृश्यां भक्तौ कोऽधिकारी इत्ययं विषयः भक्तिचन्द्रिकायां नारायणतीर्थैः विशेषेण चर्चितः। सुकरमपि भक्त्याख्यं साधनं महतः अज्ञानस्य नाशकं भवतीति शाण्डिल्यसूत्रे[107] कथितम्। तत्र शरणापन्नस्य भक्तस्य अधिकारे ज्ञानवैराग्यादीनाम् अपरेषां त्यागः कथितः इति केचन तत्सूत्राशयं व्याचख्युः परन्तु नारायणतीर्थाःनां मते तावत् अपरशब्देन कर्मण एव ग्रहणम् न ज्ञानस्य यतः ज्ञानेन पापनाशो भवतीति गीतायामपि उक्तम्[108] एवञ्च ज्ञानवैराग्यादीनां नात्र ग्रहणम्। एवञ्च लघ्वपि इत्यत्र ईशकीर्तनादि इत्येवार्थः। महदित्ययं शब्दः क्षेपकशब्दस्य विशेषणरूपेण स्वीकृतो भवति। तथा च लघ्वपि कीर्तनादिकं महतः पापस्य नाशकमिति सूत्रार्थः विव्रीयते। अत्र च श्रीभागवतं[109], गीतां[110] इत्यादीनि प्रमाणानि।

एवं महच्छब्दस्य पापस्य विशेषणत्वेन स्वीकारे सूत्रार्थः अन्य एव निष्पद्यते। एतन्मतं प्रस्तुत्य नारायणतीर्थाः स्वकीयमतानुसारं सूत्रार्थमेवं सङ्गमयन्ति –

लघ्वपि कीर्तनादिकं महद्भवति यतः शरणापन्नस्य सर्वहानात् ऋणित्वाद्यभावं प्राप्य क्षेपम् समस्तपापनाशकं भवति। तथा च स्वरूप–लाघवेऽपि फलद्वारके महत्त्वमस्ति एव।[111] अतः महच्छब्दः न पापस्य विशेषणं तेन च लघ्वपि भक्त्यधिकारे महत्, क्षेपकम् अपरसर्वहानात् इत्येव सूत्रक्रमः आदर्तव्यः इति नारायणतीर्थानां मतम्। अत एव श्रीभागवतेऽपि भक्तस्य ऋणाभावत्त्वमुक्तम्।[112]

एवं स्थूलरूपेण कीर्तनादेः महत्त्वं प्रतिपाद्य भक्तावधिकारी कः प्राणी इत्यनया अवतरणिकया नारायणतीर्थाः भक्तौ अधिकारविशेषणं व्याचक्रुः। यथा कर्मणि स्वाध्यायाध्ययनादिसम्पन्ने द्विज एव अधिकारी यथा च ब्रह्मविद्यायां साधनचतुष्टयसम्पन्न एव उत्तमोऽधिकारीतथा भक्तावपि कोऽधिकारीति भवति जिज्ञासा तस्योत्तररूपेण '**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्**'[113]इति सूत्रितं महर्षिभिः। निन्दितचाण्डालादियोनिपर्यन्तो जन्तुः सर्वोऽपि भक्तावधिक्रियते यतः तेषामपि उपदेशपारम्पर्यं सम्भवति। यथा स्त्रीशूद्रादीनां चाण्डालादीनाञ्च सामान्याहिंसादिधर्महेतुरिति ज्ञातं तथा पारम्पर्येण कीर्तनादिकं अधिकारी जनयति इति तदर्थः। अत्र स्वप्नेश्वराचार्य मतानुसारं स्त्रीशूत्रादीनामितिहासपुराणादिद्वारा चाण्डालादीनाञ्च स्मृत्याचारवत् उपदेशपारम्पर्येण सामान्याहिंसादि धर्मादिज्ञानं श्रुतिमूलं यथा भवति तथा कीर्तनादिज्ञानमपि फलदायी भवति। अन्यथा असिद्धिदोषः प्रसज्येत इति सूत्रार्थः।

चाण्डालादीनां वेदाध्ययनाभावात् कथं वा वेदार्थज्ञानं विना भक्तिसिद्धिः[114] इति शङ्कां प्रस्तुत्य नारायणतीर्थाः पारम्पर्यादिति समादधाति। शूद्रेभ्यः मन्त्रदाननिषेधेन दीक्षासु अनधिकारः तथा हीनानां सर्वेषां भक्तौ अनधिकार एव। एवम् असच्छूद्रादि निषेधपरकमिदं वाक्यम्। तादृशेभ्यः मन्त्रं प्रदाय द्विजः स्वयं शूद्रत्वमाप्नुयादिति पद्मपुराणादिवचनं नारायणतीर्थैः समाहृतम्। अत्र क्षमासत्यंदयाशौचम् इत्यादिना त्रयोदशानां सामान्यधर्मत्वं मनुस्मृतौ प्रोक्तम्। यथा तस्मिन् सर्वेषामधिकारः तथा अत्रापि सर्वेषामधिकारो भवत्येव इति सूत्रार्थो नारायणतीर्थैः समुपवर्णितः।[115]

सन्दर्भेऽस्मिन् ब्राह्मणत्त्वविषयकं मतमेकमुपन्यस्य भाष्यकारैः निराकृतम्। केषाञ्चन मते तावत् ब्राह्मणत्वादिजातिः दुर्वचा दुर्ज्ञेया च अतः ब्राह्मणानामेव अधिकारः इत्ययमर्थो भवितुं नार्हति। अतः सत्यादिगुणवत्त्वमेव ब्राह्मणत्वं, तदेव च महाभारते वनपर्वणि सर्पयुधिष्ठिरसंवादे युधिष्ठिरमुखेन विदधितम्। तथाहि –

**सत्य दानं क्षमाशीलमार्जवञ्च तपो घृणा।**

**दृश्यते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः।।** इति तथैव

**न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः।**

**यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः ब्राह्मणः स्मृतः।।**[116] इति च।।

ब्राह्मणत्वं लक्षितम्। एवञ्च 'ब्राह्मणो निर्वेदमाप्नुयात्' इत्यत्रापि ब्राह्मणत्वम् ईदृशमेव ज्ञेयं न तु जातिपरम् अत एव प्रतिलोमोऽपि सूतमहर्षिः शौनकादिमहर्षिभिः धर्मान् श्रोतुं पौराणिकः कृतः इति ते

अभिप्रेयुः। नारायणतीर्थानां मते तावत् ब्राह्मणशब्दः जातिपरो भवितुमर्हति। अत्र वेदान्तसूत्रेष्वपि शूद्रादिकरणेन मतमेतदेव समर्थितम्। अतः ब्राह्मणः सत्यत्वादिगुणवानेव इति योग्यं वचः। महाभारते मतङ्गोपाख्यानात् एवमेवावधार्यते यत् नीचादपि गुणवत्त्वमात्रेण विद्यायामधिकारो भवति इति। तस्मात् शूद्रादिना नीचेन पुराणश्रवण–भाषाप्रबन्धाध्ययनत एव ज्ञानमुत्पाद्य भक्तिः संपादनीया इति नारायणतीर्थानां निष्कर्षः।[117]

तर्हि सङ्कीर्तनलक्षणायां भक्तौ द्विजः कथमधिक्रियेत स्त्रीशूद्रादीनामेव तत्र अधिकारित्वात् न द्विजानां तत्राधिकारः इति शङ्का भवितुमर्हति।[118]नारायणतीर्थानां मते शङ्केऽयं न साध्वी यतः श्येनादिवाक्यानां मीमांसाशास्त्रे सकामपरत्वमिव पुराणवाक्यानां स्त्रीशूद्रादिपरत्वमपि तथा कल्पितम्। एवञ्च नामसङ्कीर्तने अधीतसम्पत्तिश्रवणात् अनधीतशूद्राधिकारत्वं निर्णीतमिति मतमपि निरस्तम्।[119] श्रवणादिष्वपि शूद्राधिकारत्वं भवतीति न योग्यं यतः सर्वेषामत्र अधिकारः कथितः। नूनमेव स्त्रीशूद्रादीनाङ्कृते भारतादि निर्माणं जातं तथापि तद् तेषामेव कृते न, तत्र ब्राह्मणादीनामपि धर्मनिरूपणं कृतम्। नारायणतीर्थानां मते यथा वेदाः नित्यसिद्धाः तथा पुराणान्यपि नित्यसिद्धानि अतः स्वाध्याय–अध्ययनविधिना परिगृहीतत्वात् अध्ययनं दृष्टार्थमेव। त्रैवर्णिकानां दृष्टार्थेषु ज्ञानयज्ञादिष्विव कीर्तनेऽपि अधिकारोऽनुमीयते। तथा तुरीयादीनां श्रवणद्वारा अधिकारे न कोऽपि दोषः इति नारायणतीर्थानां निष्कर्षः। सङ्कीर्तनं न वैदिकमिति केषाञ्चन मतमपि न युक्तं यतः 'तमु स्तोतारः' इत्यादिश्रुतिवाक्यैः कीर्तनमपि वेदविहितमेव। तस्मात् सङ्कीर्तनं पौराणिकमित्यस्मात् हेतोः तत्र स्त्रीशूद्रादीनामेवअधिकार इति मतं न

ग्राह्यं तत्रापि तदितरेषामप्यधिकारो भवतीति नारायणतीर्थानां निष्कर्षः।[120]

'श्रावयेत् चतुरो वर्णान्' इत्ययं विधिः 'एतया निषादस्थपतिं याजयेत्' इतिवत् प्रयोज्यव्यापारपरत्वेन श्रवणविधिरेव। सोऽपि अध्ययनविधिवत् दृष्टार्थः इत्यनेनकारणेन न ये जनाः पुराणार्थज्ञानं कामयन्ते ते चत्वारो वर्णाः पुराणानि श्रुणुयुः इत्येव अर्थः निश्चीयते। अतः पौराणेषु कर्मसु चतुर्णामपि वर्णानामधिकारः। एवं भक्तौ सर्वेषां भवत्यधिकारः इति नारायणतीर्थाः सप्रमाणं समर्थयन्ति। अत्र तु चाण्डालादीनामपि अधिकारोऽस्ति यद्यपि तेषां वैदिकेषु पौराणिकेषु च कर्मसु नास्त्यधिकारः तथापि निषादस्थपतिन्यायेन तेषामप्यधिकारो निश्चीयते। एवं गुणनामकीर्तनं कर्तुं सर्वेषामधिकारो भवतीति सिद्धयति।

### कीर्तने सर्वाधिकारः

भक्तौ अधिकारविषये महती चर्चा कृता। साधनभक्तौ सर्वेषामधिकारो भवतीति निश्चितञ्च। परन्तु कीर्तनरूपायां साधनभक्तौ मुमुक्षुणाम् अधिकाराभावात् कीर्तने सर्वाधिकारः इतीदं वचः प्रामाणिकं न भवति यतः गीतायां[121] अपि भगवता फलाद्यभावः प्रोक्तः इत्येवं साधनभक्तौ अधिकारविषये शङ्का भवितुमर्हति।

एतां शङ्कां समादधानैः नारायणतीर्थैः कीर्तने सर्वाधिकारस्य समर्थनं कृतम्। वस्तुतः ज्ञानेनैव सकलपापक्षयानन्तरं तदुद्देशेन प्रवृत्तिर्नभवति निष्कामत्वात् फलान्तरोद्देशेनापि प्रवृत्तिर्न भवति। तथापि यथा चित्तविश्रान्तिरूपदृष्टसुखार्थं मुमुक्षवः भोजनादिषु कर्मसु प्रवर्तन्ते तथा सद्यश्चित्तविश्रान्तेः कृते सङ्कीर्तनादिषु प्रवर्तेरन् इति नारायणतीर्थानां समाधानम् परन्तु अत्र पुनः काचन शङ्का समुदेति। यथा – यदि

भोजनमिव कीर्तनमपि दृष्टार्थं तर्हि यथा भोजनादिषु पृथग्विधिर्नास्ति तथा सङ्कीर्तनेऽपि विधिर्माभूत् इति अत्र नारायणतीर्थैः एवं समाधीयते यत् सङ्कीर्तनम् अदृष्टार्थं कर्म तथैव बहुधा सङ्कीर्तनस्य विधानं दृश्यते तथापि सङ्कीर्तनम् अवघातादिवत् दृष्टार्थं कर्म अपि भवति यदुक्तं सङ्कीर्तनस्य दृष्टार्थत्वे भोजनादाविव सङ्कीर्तनेऽपि विध्यभावः इति तत्रोच्यते तावन्मात्रेण सङ्कीर्तनस्य विध्यभावे अवहनन क्रियायामपि विधिर्न भवेत् अतः मुमुक्षूणामपि सुखातिशयाय भगवद्कीर्तनं भवितुमर्हति अतः कीर्तने सर्वेषामधिकारो भवतीति नारायणतीर्थानां मतम्।

कीर्तने सर्वेषामधिकारविषये पुनश्च पूर्वपक्षी शङ्कते यथा विद्वांसः बहिर्व्यापारसाध्ये कीर्तने न प्रवर्तन्ते यतः सर्वात्मविज्ञानवतां तेषां सर्व द्वैतजातस्य बाधज्ञानात् कीर्तने प्रवृत्तिः न सम्भवति इति पूर्वपक्षाशयः।

नारायणतीर्थानां मते अयमपि पूर्वपक्षः न युक्तः यतः सर्वात्मविज्ञानवतां सर्वबाधज्ञानेन कीर्तने प्रवृत्तिर्न भवतीति वचनमिदं बृहदारण्यक श्रुतिवाक्यस्य तात्पर्य बोधाभावज्जातम्।[122] वस्तुतः यत्र तु अस्य सर्वम् आत्मैव अभूत् तत् केन कं पश्येत् इति तस्य बृहदारण्यकवाक्यस्य तात्पर्यमित्थं ग्राह्यं –

ब्रह्मलोकं गतस्य विदुषः विविधैश्वर्य सम्भावकस्य स्वभवनस्य समर्थनं कृत्वा स्वप्नकाले सम्पत्तिदशायाम् आत्मनः स्वरूपम् अद्वितीयं भवतीति। एतदेव युक्तमिति ब्रह्मसूत्र[123] वाक्यतः अवगम्यते।सन्दर्भमज्ञात्वा श्रुतितात्पर्यनिर्धारणे बह्व्यः अनुपपत्तयो भवन्ति यथा द्वैतस्य दृष्टत्वे याज्ञवल्क्यप्रभृतयः तत्त्वज्ञः न भवन्ति अतः तेषां तत्त्वज्ञानाभावात् आचार्यत्वं न भवेदिति एका अनुपपत्तिः तथैव द्वैतस्य सुतरामदर्शने

याज्ञवल्क्यादीनां द्वैतज्ञानाभावे द्वैतनिरासकम् उपदेशवाक्यम् अनर्थकं स्यात्। अतः द्वैताद्वैतयोः एवं समन्वयः करणीयः –पूर्वोदाहृतवाक्यांना सर्वं द्वैतं मिथ्या इत्यत्रैव तात्पर्यम् न तु द्वैतलोपे अतः याज्ञवल्क्यादयः द्वैतं न ज्ञातवन्तो वा इत्यादि संशयः निर्मूलाः। ते द्वैतं ज्ञात्वा तस्य मिथ्या साक्षात्कारे केवलाद्वैतस्य उपदेशं कृतवन्तः। एवं श्रुतिवाक्ये अवगते न काप्यनुपपत्तिर्भवति। एवमेव हि **'तस्य तावदेव चिरं यावन्न विमोक्षे अथ सम्पत्स्ये'** इति श्रुतिवाक्योक्तः प्रारब्धभोगोऽपि अनया रीत्या सङ्गमयितुं शक्यते।परन्तु श्रुतौ योगवासिष्ठादिस्मृतौ च बहुधा प्रतिपादितमिदं यद् तासां तासां भूमिकानां जयेन जाता अद्वैतात्मनः अपरोक्षप्रमा द्वैतादर्शने एव पर्यवस्यति अतः द्वैतदर्शनं नास्तीति वक्तुं न शक्यत इति पुनः शङ्का भवति यतः अन्यासां मृत्यूनां निरोधं कर्तुम् आवश्यकेन समाधिना तदा द्वैतादर्शनं भवति अतः प्रारब्धभोगः भक्तिश्च कथं भवेतामिति शङ्कितुराशयः।

नारायणतीर्थानां मते तदा भोगाभावे न कापि क्षतिः यतः तस्य क्लेशाः सर्वे विवेकज्ञानरूपे वह्नौ दग्धबीजभावं प्राप्य पुनः विपाकानुकूला न भवन्ति अतः तत्र विषयसौन्दर्यज्ञानपूर्वात् रतिविशेषरूपात् भक्तिर्भवितुमर्हति अत एव –

**'यत्र चैव आत्मना आत्मानं पश्यन् आत्मनि तुष्यति'**[124] इति गीतासु स्वयमेव भगवता समाधावपि रतिविशेषरूपं प्रेम व्युत्थाने च कीर्तनादि भक्तिः भवितुमर्हतीति सिद्धान्तितम्। अयमेव भक्तिसंप्रदाय इति नारायणतीर्थानां निष्कर्षः।

एवमपि भक्तिः पुरुषार्थो न भवति तस्याः पुरुषार्थ चतुष्टये अनन्तरभावात् इत्यपि केचन व्याचक्षिरन् नारायणतीर्थानां मते तावत् इदमपि वाक्यम्

असमञ्जसम्। भक्तिजन्यं सुखं धर्मे अन्तर्भवति अतः पुरुषार्थचतुष्टये अन्तर्भावद्वारा भक्तिः पुरुषार्थ एव। अथवा परमानन्दरूपत्त्वात् भक्तिः स्वतन्त्रः पुरुषार्थः तस्मात् तं परमानन्दमुद्दिश्य विवेकिनः भक्तौ प्रवर्तन्त इति कीर्तनरूपभक्तौ सर्वाधिकारः नारायणतीर्थैः बहुधा समर्थितः।

**मोक्षस्यस्वरूपम्**

शाण्डिल्यभक्तिसूत्राणामाधारेण मोक्षस्य स्वरूपमेवं निर्देष्टुं शक्यते। '**ब्रह्मसंस्थोऽमृतत्त्वमेतीति**' श्रुतिप्रतिपादितम् अमृतत्त्वं मोक्ष एव। स च ईश्वरे अन्यानुरागत्यागेन अनुरक्त्या सिद्धयति। एषा ब्रह्मनिष्ठा श्रुतिवाक्ये 'ब्रह्मसंस्था' इति व्यपदिष्टा। अत एव नारायणतीर्थाः निष्ठासंस्थशब्दयोः अर्थैक्यं वदन्ति। एवञ्च अनन्यभक्त्यैव मोक्षो भवतीति**अनन्यभक्त्या तद्बुद्धिलयादत्यन्तम्।**[125] सूत्रेण केवल निष्कामब्रह्मभक्त्या ब्रह्मानन्दावाप्तिरूपा मुक्तिर्भवतीति नारायणतीर्थानां व्याख्यानं सङ्गच्छते। ते च स्वकीयायाः अद्वैतनिष्ठायाः कारणेन भगवद्भावरूपमेव मोक्षं मन्यन्ते।[126] अन्यत्रापि प्राक्तानेक–शुभादृष्टबलात् विविदिषया सद्गुर्वाश्रयणेन ईश्वरबुद्ध्या तद्भजनेन ईश्वरकृपां प्राप्य ततः आत्मसाक्षात्कारात् अज्ञानपाशनिवृत्तौ ईश्वरसायुज्यमवाप्नोतीति**न च क्लिष्टः परः स्यादनन्तरं विशेषात्।**[127] सूत्रस्य व्याख्याने भगवद्सायुज्यमेव मोक्ष इति नारायणतीर्थैः स्पष्टीकृतः।

भगवदंशः जीवः अनाद्यज्ञानपाशनिबद्धः परमेश्वरस्यैव शक्तिरूपया प्रकृत्या मोहितः सन् अभक्तिवशात् संसारचक्रं प्राप्नोति भगवद्भक्त्यैव च ततो मोक्षमवाप्नोतीति च भक्तिसंप्रदायः। भक्त्या ईश्वरस्तुष्टो भूत्वा तं

जीवमनुगृह्णातीति अतः ईश्वर एव फलप्रद इति सिद्धान्तः। **फलमस्माद्बादरायणो दृष्टत्वात्।**[128]

सूत्रे भक्त्या भजनीयस्य ऐक्यं वास्तवमेव भवतीति भेदः काल्पनिकः सन् उपाधिकृतः सः उपाधिनाशे नश्यतीति इतिसूत्रप्रतिपादितम्**तदैक्यं नानात्वैकत्वमुपाधियोगहानाद् आदित्यवत्।**[129] अतः जीवस्य ब्रह्माभेद एव इति नारायणतीर्थाः स्पष्टीचक्रुः। तत्र कीर्तनादिरूपाभक्तिः गौणी परानुरक्तिरूपा च मुख्या इति भक्तेः द्वैविध्यं शास्त्रप्रतिपादितम्। तत्र कीर्तनादिरूपागौणी–भक्तिः परभक्तेः साधनमिति भक्तिसंप्रदायः। अस्मिन्विषये नारायणतीर्थानां मतं विस्तरशः तत्र तत्र विवेचितम्।[130] लघ्वपि कीर्तनादिकं महतः पापस्य नाशकं भवति, तत्र निन्दितचाण्डालादिपर्यन्तो जीवः अधिकारी भवितुमर्हति सङ्कीर्तनादिषु स्त्रीशूद्रद्विजबन्धूनामिव ब्राह्मणानामपि अवश्यकर्तव्यत्वं विद्यते इति नारायणतीर्थाः व्याकुर्वन्ति। तथैव तादृशभक्तिप्रतिपादकानां पुराणादिग्रन्थानामपि वेदानामिव प्रामाणिकता भवत्येव। अतः सङ्कीर्तनं वैदिकमेवेति नारायणतीर्थाः विशदयामासुः। न केवलं संस्कृतेन भाषयापि गुणनामकीर्तनं कर्तव्यमेवेति तेषां मतम्। भक्तः समाधौ स्वाभिन्न भगवत्स्वरूप– प्रेमानन्द–निमग्नः भवति व्युत्थानदशायान्तु भगवद्गुणगानानन्द–निमग्नो भवतीति भेदो नारायणतीर्थैः दर्शितः। तथैव तादृश मोक्षस्य बहुषूपायेषु परयाभक्त्यैव मोक्षप्राप्तिरिति शाण्डिल्यमहर्षिणा सूत्रितम्।[131] अत्र स्वकीयस्य अद्वैतादरस्य कारणेन नारायणतीर्थाः ज्ञानमार्गो भक्तिमार्गश्चेति मोक्षमार्गद्वयं प्रतिपादयन्ति। तथा च निर्विशेषरूपस्य ब्रह्माख्याविर्भावस्य ज्ञानरूपं सविशेषरूपस्य च ईश्वराविर्भाव रूपस्य भक्तिरूपं तथा ज्ञानभक्तिद्वाररूपेण कर्मार्पणरूपमिति मोक्षस्य मार्गद्वयं नारायणतीर्थैःकथितम्।[132] अत एव

भक्तिशास्त्रस्य व्याख्यानेऽपि ते मोक्षे मार्गद्वयमेव इत्यस्माकं पन्थाः इति स्वसिद्धान्तं प्रतिपादयामासुः। सूत्रकृन्मते भक्तियोग एव एको मार्गः ज्ञानन्तु भक्तिसाधनमिति यद्यपि उक्तं तथापि परभक्तेः स्वतः पुमर्थरूपत्वात् ज्ञानमेव मोक्षोपायः इति नारायणतीर्थानाम् अभिप्रायः अतः भगवद् ज्ञानोत्तरं भगवति परामनुरक्तिं प्राप्य तत्सायुज्यरूपं मोक्षं प्राप्नोति भक्त इति तत्र आचण्डालादि सर्वेऽपि अधिकारिणः इति ते निःशेषं कथयामासुः।

## परमेश्वरस्य अवताराः भक्तिसंप्रदाये तेषां महत्त्वञ्च

भक्तिसंप्रदाये अवतारस्य महत्त्वं वरीवर्ति परमात्मानं प्रति भक्तेः कृते योग्यं कमपि अवतारं परिकल्प्य भक्ताः रसास्वादम् अनुभवन्ति।

'स्वसंकल्पपूर्वकपराधीनव्यक्तीकृतदेहोभक्तवात्सल्याद्यनेक–गुणोल्बणः अवतारः'[133] इति नारायणतीर्थैः स्वयमेव योगव्याख्याने लक्षितरीत्या अवतारो नाम परमात्मनः तादृशं रूपं यत् परमात्मनैव स्वसंकल्पेन स्वीकृतं भक्तानामनुग्रहाय धृतं भक्तवात्सल्यादिबहुगुणपूर्णम् इत्यर्थो भवति। अवतारं विना भक्तेरालम्बनं दुःशकं भवति। सगुण–परमात्मनः स्वीकारे अवतारसंकल्पना दृढमूला भवति। परमात्मनः अवतारो नाम दिव्यं रूपम् इति '**तच्च दिव्यंस्वशक्तिमात्रोद्भवात्**'इति सूत्रव्याख्यानानुसारेण परमात्मनः भौतिकादि– देहपरिग्रहः दिव्य एव न तु भौतिकः यतः सः देहः परमात्मनः एव शक्तिमात्रोद्भवः। एतद्विवरणसमये नारायणतीर्थाः स्मृतिप्रमाणं दर्शयन्तः प्रतिपादयन्ति यत् परमात्मा ईश्वरोऽपि मायावी इव स्वमायया स्वामेव प्रकृतिमधिष्ठाय इहलोके अवतरति। एते च परमात्मनः अवताराः सर्वेऽपि मिथ्याः,

हानोपादानरहिताः अप्राकृताः, परमानन्दपूर्णाः, ज्ञानामात्राः निर्दुष्टाः, गुणपूर्णाश्च इति वराहपुराणवाक्यमुद्धृत्य नारायणतीर्थाः स्पष्टीकुर्वन्ति।

एवमप्राकृतः परमात्मनः अवतारश्चेत् तस्य गर्भप्रवेशजन्म–बाल्य–कौमारादि दशानां का गतिरिति प्रश्न उद्भवेत्। अर्थात् तादृशस्य अवतारस्य सर्वा इमा दशाः भवेयुर्वेति प्रश्नः तदुत्तररूपेण नारायणतीर्थाः कथयन्ति यत् कश्चन मायावी यदा कामपि मायाम् उत्पादयति तदा तस्य मायाजनस्य दशाः यथा भवेयुः तथैव अवतारस्य दिव्यस्य इमा दशाः। तर्हि मायिकस्य अवतारस्य तत्तत् कर्मकर्तृत्त्वम् उपपद्येत वा इति प्रश्ने यथा मायाविनः मायायां सूत्रादिमार्गेण कस्यचन व्यक्तिविशेषस्य आकाशारोहणादिकं दृश्यते तथैवास्य दिव्यावतारस्य विभिन्नकर्मकरणम्।

एतादृशस्य आवतारिकस्य भगवच्छरीरस्य उपादानं किमिति प्रश्नो भवितुमर्हति। यतः जगति सर्वस्यापि कार्यस्य विनोपादानं निर्मितिर्न भवति। अतः परमेश्वरस्य अवतारस्य उपादानं किमिति प्रश्नः समञ्जसः। अत्र केचन अविद्यामेव तदुपादानरूपेण अङ्गीकुर्वते परं परमात्मनि अविद्यायाः अभावेन अविद्या दिव्यावतारस्य उपादानमिति कथयितुं न शक्यम्। यतो हि यत् यस्य उपादानरूपेण स्वीक्रियते तत् तस्य अयुतसिद्धं भवति। यथा मृत्तिका घटस्य। घटे निर्मिते मृत्तिका स्वकार्येण तेन सह भवत्येव। यद् यस्मिन् नास्ति तत् तस्य उपादानं न भवति। अतः स्वस्मिन् अविद्यायाः असम्भवात् परमात्मनः अवतारस्य उपादानम् अविद्या न भवति।

एतद्दोषपरिहाराय जीवगता अविद्या एव परमात्मनः दिव्यावतारस्य उपादानम् इति केनापि उच्यते चेत् तदपि न विचारसहम् यतः

जीवगतायाः अविद्यायाः कारणेन समुत्पन्नं शुक्ति–रजतादिकं तुच्छमिति हेतोः जीवाविद्यायाः परिणामरूपः अवतारोऽपि तुच्छ एव भवेत् अतः अवतारस्य जीवाविद्या उपादानं न भवति।

केवलचैतन्यम् अवतारस्य कारणम् इत्यपि वक्तुं न शक्यते। यतः अवतारस्य साकारत्वेन तस्य उपादानकारणस्य चैतन्यस्य अपि साकारत्वं भवेत् अथ च चैतन्यस्य अतीन्द्रियत्वात् अवतारस्यापि अतीन्द्रियत्वं भवेत् इति बहुषु आक्षेपेषु सत्सु परमात्मनः अवतारस्य उपादानकारणमेव न सिद्ध्येत् उपादानाभावे च अवतार एव न भवेदिति आक्षेपः।एतदाक्षेप–परिहारे नारायणतीर्थाः एवं सिद्धान्तयन्ति यत् परमात्मा प्रत्यक्–चैतन्यमात्रमुपादानीकृत्य स्वमाययैव अवतारं गृह्णाति। **अतश्च अवतारो नाम 'परमात्मनः स्वमायया प्रत्यक्चैतन्यमालम्ब्य आविर्भावः'।**[134] प्रत्यक्चैतन्यं तावत् उपादानकारणम्। तावन्मात्रस्यैव उपादानकारणत्वेन पूर्वोक्त–दोषास्सर्वे परिहृता भवन्ति। पुराणेष्वपि नित्यैव सा जगन्मूर्तिः कार्यसिद्ध्यर्थमाविर्भवति इति अवतारविषये कथितमप्यत्र प्रमाणम्।

अथ मायाविनः दृष्टान्तेन यत् प्रतिपिपादयिषितं तत्रापि एतावान् विशेषः यत् लौकिक–मायावीमायामपसंहरन् द्वितीयं मायाविनमपि उपसंहरति। भगवान्स्तु स्वमायामनुपसंहरन् स्वविग्रहमपि नोपसंहरति अतः परमात्मनः अवतारोऽयं मायाकृतोऽपि न अनित्यः अतः तस्य अवतारस्य हिरण्यश्मश्रुत्वादि लक्षणविग्रहरूपस्य सर्वेश्वरत्त्वं युक्तमेव। **'अन्तस्तद्धर्मोपदेशात्'**[135]इति ब्रह्मसूत्रे परब्रह्मणः धर्माणां विषये एतदेव प्रतिपादितम्। एतद् अनयैव रीत्या प्रतिपादयितुं शक्यं नान्यथा। अतः भगवतः मायामयं शरीरमेव अवतार इति स्पष्टम्।

अवतारस्य विषये नारायणतीर्थानां मतम् अतीव स्पष्टं विद्यते। योगसिद्धान्तचन्द्रिकायामपि ईश्वरनिरूपणसन्दर्भे आचार्यैः अवतारविषयिणी चर्चा समुपस्थापिता। **'अवतारो नाम 'स्वसङ्कल्पपूर्वक पराधीनव्यक्तीकृतदेहो भक्तवात्सल्याद्यनेक–गुणोल्बणः'**[136] इति तैः अवतारो लक्षितः। इदमेव अवतारलक्षणं भक्तिचन्द्रिकायामपि स्वीकृतम्। अर्थात् भगवतः अवतारे केचन मुख्यांशाः लक्ष्यन्ते –

1) अवतारः परमात्मना स्वेच्छया स्वीक्रियते,

2) अवतारः भक्तानां कार्यार्थं भवति,

3) अवतारे भक्तवात्सल्यादयः अनेके गुणाः भवन्ति, अतः नारायणतीर्थानां ग्रन्थान्तरसमवलोकनेन च अवतारविषये तेषां मतं स्पष्टं ज्ञातुं शक्यते।

**'वृष्णीषु श्रेष्ठ्येन तत्'**[137] इत्यस्य शाण्डिल्यभक्तिसूत्रस्य व्याख्यानावसरे तथा **'एवं प्रसिद्धेषु च'**[138] इति सूत्रव्याख्याने च नारायणतीर्थैः अवतारविषयिणी चर्चा विहिता। अस्य व्याख्यानसमये **'तद्वाक्यशेषात् प्रादृर्भावेष्वपि सा'**[139] इत्यस्मात् सूत्रात् प्रादुर्भावेष्वपि इत्यस्य पदस्य अनुवर्तनेन 'एवं प्रसिद्धेषु च' सूत्रेऽपि अवतारतत्त्वम् आचार्याः सङ्गमयन्ति। अत्रैव सर्वेषामेव अवतारविशेषाणां श्रुतिस्मृतिसिद्धत्त्वम् आचार्याः दर्शयन्ति। एतेषामवताराणां सिद्धिः प्रत्यभिज्ञानबलेनापि भवति इति तेषामाशयः। तत्त्वमस्यादि–वाक्यस्य तात्पर्यनिर्णयसमये उपक्रमादिषड्लिङ्गानि यथा समाश्रितानि तथा अवतारसिद्धावपि नारायणतीर्थैः उपक्रमादिलिङ्गानि दर्शितानि। प्रत्यभिज्ञानात् कथङ्कारम् अवतारसिद्धिः इति अधुना प्रदर्श्यते।

उपक्रमः –

**चिन्मयेऽस्मिन् महाविष्णौ जाते दाशरथौ हरौ।**

**रघोः कुलेऽखिलं राति राजते यो महीस्थितः।।**[140]

अर्थात् चिन्मयः महाविष्णुः अस्मिन् पृथिवीतले दशरथसुतरूपेण जातः सम्पूर्णभुवनतल पावयामास। तदनन्तरम्

**एवम्भूतं जगदाधारभूतं रामं वन्दे सच्चिदानन्दरूपम्।**

**गदाधरं शङ्खाब्जधरं भवारिं स यो ध्यायेन्मोक्षमाप्नोतिसर्वः।।**[141]

अर्थात् सच्चिदानन्दरूपं श्रीरामं भजित्वा सर्वोऽपि मोक्षमाप्नोति इति प्रतिपादितम्। पश्चात् '**अर्धमात्रात्मकः रामः ब्रह्मानन्दैक विग्रहः**'[142] इति कथयित्वा श्रीरामस्य तथैव '**नृसिंह आसीत् परेश्वरः**'[143] इत्यादिना नृसिंहस्य च नारायणरूपत्वं परब्रह्मत्त्वञ्च प्रत्यभिज्ञायते इति दर्शितम्।

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।**

**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना।।**[144]

अर्थात् ब्रह्म चिन्मयम् अद्वितीयं निष्कलम् अशरीरि च इति कारणेन उपासकानां क्लेशम् अन्वीक्ष्य तेषाम् उपासकानां कृते तादृशस्य ब्रह्मणः रूपकल्पना कृता इति अस्यार्थः। निर्गुणोपासना क्लेशाय भवति इति हेतोः सगुणोपासना शास्त्रविहिता दृश्यते। भगवद्गीतायामपि –

**क्लेशोऽधिकतरस्तेषां अव्यक्तासक्तचेतसाम्।**

**अव्यक्ता हिगतिर्दुःखं देहवद्भिरवाप्यते।।**[145]

इत्यनेन श्लोकेन निर्गुणोपासनायाः क्लेशजनकत्वं सगुणोपासनायाश्च उपासनायाः कृते अवश्यग्राह्यत्त्वञ्च प्रत्यपादि। एवं सर्वेऽप्यवताराः

अवतारिणो नारायणस्यैव इति प्रत्यभिज्ञानबलात् भक्तिर्दृढा भवति इत्याचार्याणां मतम्।

सर्वेषामपि अवताराणां पारम्यं समानं प्रतिपादयन्ति अत एव पाराशरोपपुराणे शिवमाहात्म्यमुपवर्णयन्तं श्लोकमेकम् उदाहृत्य प्रत्यभिज्ञानबलात् शिवोऽपि परब्रह्मैव इति साधयन्ति।

**तस्य साधारणी मूर्तिः साम्बा चन्द्रार्धशेखरा।**

**तामेव सततं विष्णुब्रह्माद्याश्च सुरेश्वराः।।**[146]

**ध्यायन्ति बन्धनाशाय जगतां हित काम्यया।** इति श्लोके वर्णितः शिवः परब्रह्मैव। तथा सरस्वती–दुर्गा–प्रभृतयः देवताविशेषाः अपि प्रत्यभिज्ञानबलात् ईश्वरावताराः एव। अनेनैव हेतुना एतान् देवताविशेषान् प्रति भक्तिरपि निःश्रेयसं साधयितुमीष्टे।

यद्यपि सर्वेषामपि अवताराणां समानत्त्वं प्रमाणसिद्धं भवति तथापि भगवतः श्रीकृष्णस्य साक्षात् ब्रह्मत्त्वकथनम् अन्येषाञ्च अवतारत्त्व कथनं यत् सूत्रकारैः कृतं तस्य तात्पर्यम् एवं भवति यत् भगवतः श्रीकृष्णस्य लीलाविशेषादितः अन्येषामपेक्षया आधिक्यम्। यतः गोपालतापिनिनामक–उपनिषद्यपि '**एको हि वै पूर्वं नारायणो देवः**' इति उपक्रम्य श्रीकृष्णस्य पारम्यं प्रतिपादितम्। अत्र काचिच्छङ्का भवितुमर्हति–यदि सर्वेषामपि समानगुणवत्त्वं तर्हि कथं वा कस्यचिदेकस्य श्रेष्ठत्वं भवेत्? इति। सर्वत्रापि सत्यज्ञानादयः धर्माः यदि समानाः तर्हि वैषम्याभावादेव न कस्यचिद् श्रेष्ठत्त्वं स्यात्।

**तेऽमी सन्ति सहस्रशो भगवति श्रीतत्त्वमूर्तौ हरौ।**

**शम्भौ चैव महेश्वरे परतरे कृष्णादिके नित्यशः।।**[147]

एतादृशप्रमाणबलात् न कस्यचित् न्यूनत्वं वा श्रेष्ठत्वं भवेदिति शङ्कायाः स्वरूपम्। एतत् समादधानैः आचार्यैः एवमवादि यत् –

**सर्वाद्भुतचमत्कारि लीलाकल्लोलवारिधिः**

**अतुलमधुरप्रेमी मण्डितप्रियमण्डलः।।**[148]

**त्रिजगन् मानसाकर्षी मुरलीकलकुजितः** – इति भगवतः श्रीकृष्णस्य विशेषाभिप्रायात् तस्यैव श्रेष्ठत्वम्। अस्य च विशेषस्य बीजं किम् इति प्रश्ने भगवता स्वयंस्वीकृतमर्यादैव इति समाधातुं शक्यम्।

एवं विभिन्नैः प्रमाणैः नारायणतीर्थाः स्पष्टं प्रतिपादयन्ति यत् सर्वेऽपि अवताराः विनाभेदं नारायणस्यैव भवितुमर्हन्ति केवलमुपासकानां कृते विभिन्नरूपेण दर्शितास्सन्ति। अतः वस्तुतः तारतम्यं नास्ति इत्यैव श्रुतिसिद्धमिति कथयित्वा तारतम्ये तावत् श्रुतिस्मृतिविरोधो भवेदिति ते स्पष्टयन्ति।[149] एवम् अवताराणां सर्वेषां तारतम्यनिराकरणमपि नारायणतीर्थाःनाम् व्याख्यानस्य प्रमुखं स्वरूपम्।

नृसिंहादयः कीदृशावताराः इत्यपि जिज्ञासाविषयो भवति। यतः मैत्रायण्यामुपनिषदि **"एतास्तनवोऽग्निवायुरादित्यः कालोऽयं प्राणोन्नं ब्रह्मादि विष्णुरुद्र इत्येके अन्यम् अभिध्यायन्त्येके अन्यम्"** इति उक्त्वा ब्रह्मणः मायिक–देहस्यापि निषेधः कृतो दृश्यते अर्थात् ब्रह्मणः मायाकल्पितः देहोऽपि न भवतीति सारांशः। अग्न्यादिदेहः एव ब्रह्मणो देहा इति निर्देशेन ब्रह्मणः लीलावतारस्य निषेधोऽपि दर्शितः। अत एव केषुचित् पुराणेषु नृसिंहवराहशरभादीनां परस्परम् उपमर्द्यत्वं दर्शितम्। तथैव कुत्रचित् ब्रह्मविष्णुरुद्राणां मोहपरवशादिकं वर्णितम् अर्थात् क्वचित् अवताराणामेतेषां परस्परउपमर्दकत्वं क्वचित् महेश्वरादीनां मोहपरत्त्वञ्च दृष्ट्वा एते सर्वेऽपि अवताराः केवलं जीवविशेषाः सन्तः

उपासनार्थं परमेश्वरत्वमारोप्य स्वयं परमेश्वराः इति उच्यन्ते। तेषाञ्च आत्मनि परमात्मभावनया तत्र तत्र '**अहं सर्वस्य प्रभवः**' इत्यादयः उपदेशाः वर्णिताः दृश्यन्ते। एवम् अवताराणां विषये केषाञ्चन आक्षेपाः अत्र प्रस्तुताः खण्डिताश्च।

मैत्रायणीश्रुतिप्रमाणेन अवताराणां विषये यः आक्षेपः कृतः यत् एते रुद्रादयः जीवविशेषाः उपासनार्थं परमेश्वरा इति वर्ण्यन्ते यतः ब्रह्मणः मायिकदेहस्य निराकरणम् उपनिषत्सु कृतम् इति तत् सर्वथा असमञ्जसम् इति विवृण्वन्ति। उपनिषदर्थस्पष्टीकरणे नारायणतीर्थाः कथयन्ति यत् मैत्रायण्यामुपनिषदि निराकृतः परब्रह्मणो देहः परमात्मनः अदृष्टेन आरब्धः भोगार्हः नास्ति इत्यैव बोधयितुम् अर्थात् यथा जीवानां तेषामदृष्टद्वारा तेषां भोगार्थं शरीरं भवति तथा परमात्मनः न भवति इत्येव तत्र शरीरनिराकरणस्य अर्थः।

'**लोकवत्तु लीलाकैवल्यम्**'[150] इति ब्रह्मसूत्रेणापि ब्रह्मणः लीलावशात् अवतारग्रहणो प्रतिपादितम्। यतः ईश्वरः विचित्रानेकशक्तिवान् अतः तस्य अवतारा अपि भवितुमर्हन्ति। एतेनैव कारणेन ईश्वरस्य श्रौतावताराः पुराणावताराः इति द्वैविध्यं यत् कैश्चित् कविकृतं तत् निष्प्रयोजनमिति मन्तव्यम्। यतः परमात्मनः तादृशद्वैविध्यकल्पने प्रमाणं नास्ति। पुराणानि च श्रुतिमवलम्ब्यैव स्वमर्थं कथयन्ति यथा 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' अर्थात् वेदार्थस्य प्रतिपादनार्थम् इतिहासपुराणानि च आविर्भूतानि अतः श्रुतिपुराणयोः एकार्थत्त्वमेव समञ्जसम्। एतस्मात् हेतोः सर्वेप्यवताराः परमात्मनः एव लीलावताराः इत्येव मन्तव्यमिति अभिप्रयन्ति।

**अवतारतत्त्वम्**

ब्रह्मरुद्रादीनां स्वरूपस्पष्टीकरणसमये तेषां स्वरूपम् अवतारप्रकारांश्च विवृण्वते। सच्चिदानन्दघन, अद्वितीयः निर्विशेषः सर्वकारणञ्च परमात्मा एक एव। स एव सर्वज्ञत्वादि स्वरूपलक्षितः यस्य श्रुतिषु सत्यमित्यादि शब्दैः परब्रह्मत्त्वं प्रत्यपादि। यदा परमात्मा अयं त्रिगुणमायाविशिष्ट भवपति तदा तस्य ईश्वर इति व्यपदेशो भवति। एतस्यैव ईश्वरस्य ब्रह्मविष्णुरुद्राः अवताराः कथ्यन्ते। अत्र च मैत्रायणीउपनिषद्[151] प्रमाणम्। तमोगुणप्राधान्ये ईश्वरस्येव रुद्र इति रजोगुणप्राधान्ये ब्रह्मेति सत्त्वगुणप्राधान्ये विष्णुरिति तथा तथा उल्लेखो भवति। एते ब्रह्मादयः त्रयः गुणमात्रोपाधिकत्त्वात् संप्रदाये अवतारा इति तथैव प्रकटितानेकशक्तिमत्त्वात् पूर्णाः इति च कीर्त्यन्ते। ब्रह्मादयः स्वयंपूर्णाः सन्तः स्वगुणोपाधिकत्ववशात् गुणावताराः इत्यपि नारायणतीर्थाः मन्यन्ते।

यद्यपि रुद्रादीनां गुणांशप्राधान्येन गुणावतारत्त्व वक्तुमुचितं तथापि स्वेच्छापरिगृहीत लीलाविग्रहस्यापि उपाधितः तेषां लीलावतारत्त्वमपि कथं नोच्यते[152] इति कस्यचिदाक्षेपो भवितुमर्हति। एतस्य समाधानं दधतः नारायणतीर्थाः इत्थं कथयन्ति यत् एतेषां लीलावतारत्वं–कथनेन प्रतिकल्पं लीलाविग्रहाणां आनन्त्येन ब्रह्मादीनामपि आनन्त्यं भवेत्। तन्नेष्यते। यतः ब्रह्मादीनाम् आनन्त्येन '**एको विष्णुरेको रुद्रः**' इति प्रतिपादयन्ती श्रुतिः विरुध्येत। तस्मात् ब्रह्मादयः विनावतारा एवेति सिद्धम्।

संप्रदाये चतुर्भुजो नारायणः चतुर्मुखो ब्रह्मा पञ्चमुखश्च महेश्वरः श्रूयते। ते मत्स्याद्यवताराश्च परमेश्वरस्यैव लीलाविग्रहोपहिताः लीलावतारा

एव। यतः प्रतिकल्पम् एतेषाम् आनन्त्यं श्रूयते। अत्र कश्चित आक्षेपो भवितुमर्हति।

एते सर्वेऽपि परमेश्वरस्य साक्षादेवतारा इत्यनुक्त्वा लीलावतारा इत्येव कथने कारणं किमिति प्रश्नः। यतः पुराणेषु चतर्भुजः विष्णोरवतारत्वेन चतुर्मुखः ब्रह्मणोऽवतारत्वेन पञ्चमुखश्च परमशिवावतारत्वेन च गीयन्ते अतः ते लीलावताराः इत्येव मन्यताम् इत्याक्षेपः।[153] एतत् समाधाने नारायणतीर्थाः स्पष्टयन्ति यत् चतुर्भुजशरीरिणः पालनकर्तृत्वादिकं दृष्ट्वा सः चतुर्भुजः विष्णोः लीलावताराः इत्येव कथयितुं न युक्तम् यतः तस्मिन्नेव दैत्यसंहारादिरूपरुद्रकार्यादिकमपि दृश्यते। यद्यपि सोवतारः देवरक्षणफलकः तथापि तमःकार्यत्वेन तत्र रुद्रस्यापि कार्यं दृश्यते। एवम् अन्यस्मिन्नपि अवतारे इतरस्यापि कार्यं दृश्यते। अतः ते तावत् लीलावताराः एव। तथैव दुर्गादीनामापि स्वरूपं ज्ञेयम्।

एवम् उपपत्तिपूर्वकं सर्वेषामप्यवताराणां परमेश्वरस्य लीलावतारत्त्वं समञ्जसमेव इति नारायणतीर्थाः प्रतिपादयन्ति।

**अवताराणां परस्परं भेदः**

एवं विभिन्नेषु अवतारेषु केचन –

1) भक्तिचन्द्रिका[154]




परस्परभेदं तारतम्यञ्च दृष्ट्वा स्वयं क्लिष्णन्ति अन्यांश्च क्लेशयन्ति अतः तेषां खण्डनेन सर्वेषामवताराणां साम्यं प्रतिपादयद्भिः नारायणतीर्थैः स्मृतिप्रमाणं दर्श्यते –

**"हरिरूपी महादेवः लिङ्गरूपी जनार्दनः।**

**ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत्"।**[155] इति

नारदपुराणानुसारम् अवतारेषु परस्परभेददर्शी नरकङ्गच्छेदिति ज्ञायते। भविष्यपुराणेऽपि–'**ये च मूढा दुरात्मानो भिन्नं पश्यन्ति माम् हरेः**'[156] इति

कथयित्वा भेददर्शिनः दुरात्मत्वं कथितम्। अवतारेषु भेदसत्त्वे गुणभेदेन विष्णुशिवादिशब्दानां शिवविष्णुनामत्वादि न सम्भवेत्। तेन असङ्गतिः आपद्येत इति भावयित्वा पुराणानुसारम् अवताराणां परस्परभेदो निराकृतः नारायणतीर्थैः। ब्रह्मादीनामिव रामकृष्णादीनामपि विष्ण्वादीनाम् अवतारत्वं न वक्तव्यम्। रामकृष्णादयः साक्षादेव परमेश्वरावताराः।[157]

**अवतारप्रकाराः**

नारायणतीर्थैः अवताराणां लक्षणंप्रकाराश्च सविश्लेषं विवृताः। अवतारः परमेश्वरेण स्वसङ्कल्पवशाद् परकार्यार्थं स्वीकृतो देहः। भक्तवात्सल्यादिगुणपूर्णः। अयं विभवावतारः अर्चावतारश्च इति द्विविधः। तत्र गमनागमनसंश्लेषविश्लेषयोग्यं यथाभवेत् तथा स्वीकृतं दिव्यं रूपम्। अस्य विभवावतारस्य स्वरूपावतारः आवेशावतारश्च इति पुनः प्रकारद्वयम्। तत्र स्वीयम् अप्राकृतं रूपम् इतर–असजातीयतया प्रकटयन् स्थितः ईश्वर एव। अस्य च स्वरूपावतारस्य मनुज–अमनुजरूपेण पुनश्च प्रकारद्वयं भवति। मनुजावतारो नाम रामकृष्णादिः नराकृतिः। वामनावतारः मत्स्यावतारः इत्यादयः अमनुजावतारेण स्वीक्रियन्ते। एते सर्वेऽपि श्रुतिप्रमाणेन पूर्णावतारा एव। तथापि श्रीकृष्णः तत्र अनेकशक्तिनामेकत्र आविर्भावात् पूर्ण इति स्वीक्रियते। अत एव श्रीमद्भागवते –

**अन्येचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्**[158]–

इति वाक्येन श्रीकृष्णस्य पूर्णत्वम् अन्येषाञ्च अंशावतारत्वं प्रतिपादितम्। एतेषु स्वरूपेण ईश्वरस्य आवेशे स्वरूपावेश इति, शक्त्याः आवेशेन च शक्त्यावेशावतार इति च व्यवहारे भवति। अतः क्वचित् स्वरूपेण

क्वचिच्च स्वशक्त्या ईश्वरः उपस्थितो भवति इति भागवतं मतम् ।एवञ्च स्वयं भगवता गीतासु प्रोक्तत्वात् आधुनिका अपि अवताराः भगवदंशत्वेन स्वीक्रियन्ते । यथोक्तं – यद्य**द् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।**[159]

एवं श्रीनारायणतीर्थैः सर्वेषां वैदिकानां पौराणानाञ्च अवताराणां समन्वयं कृत्वा आधुनिकानामपि तत्र तत्र स्वीकृतानामवताराणां प्रामाण्यं सप्रमाणं प्रतिपादितम् । नारायणतीर्थानाम् अवतारविषयकः अभिनिवेशः सप्रमाणञ्च तत् प्रतिपादनं न केवलं भक्तिचन्द्रिकायाम् अपि तु योगसिद्धान्तचन्द्रिकादि ग्रन्थान्तरेऽपि समुपलभ्यते। अत एव भक्तिसंप्रदाये नारायणतीर्थानां विचारधारायाम् अवतारसङ्कल्पनायाः अत्यतं विशिष्टं महत्त्वं वर्तते ।

**निष्कर्षः**

भक्तिसंप्रदाये शाण्डिल्यसूत्राणां विवेचनमात्रेण अतुष्यद्भिः आचार्यैः तदनुगुणं तदुपयोगि च अवतारतत्त्वप्रतिपादनं कृत्वा भक्तिसंप्रदाये कश्चन नवीनः उपक्रमः आरब्धः इति प्रथितमेव। एतेन भक्तितत्त्वस्य समाकलने नवीनः कश्चन पन्थाः समाश्रितः इत्यत्र न काप्यतिशयोक्तिः । एतेन च प्रतिपादनेन भक्तिविषये सञ्जातानां बहूनां समस्यानां परिष्कारोऽपि सूचितो भवति तथैव अद्वैतवेदान्तस्यापि प्रमुखसिद्धान्तानां भक्तितत्त्वेन सह समन्वयं कृत्वा द्वयोरनयो विरोधाभासः परिहृतो भवति ।

**अद्वैते भक्तेः शक्यता**

स्वव्याख्याने नारायणतीर्थैः भक्तिं पुरस्कृत्य अद्वैतवेदान्तदृष्ट्या काचन चर्चा पुरस्कृता। सर्वभेदनिराकरणरूपे केवलब्रह्मपरे अद्वैते भेदाश्रया सगुणब्रह्मपरा भक्तिः कथं नु शक्या भवेदिति सहजा खलु जिज्ञासा ।

प्रसिद्धाः अद्वैत्वेदान्तसिद्धान्ताः इत्थं भवन्ति–

1 निर्धर्मकं, निर्गुणं ब्रह्मैव सत्यम्

2 ब्रह्म सत्–चित्–आनन्दरूपं भवति,

3 ब्रह्म सर्वविध–भेदशून्यं भवति,

4 अहं प्रत्ययालम्बनम् आत्मैव ब्रह्म,

5 आत्मैकत्व विज्ञानस्य अभावकारणेन संसारभ्रमो भवति,

6 अतः संसारभ्रम–निवृत्तये आत्मैकत्वज्ञानमेव साधनम्,

7 ब्रह्मरूपेण आत्मनः अवस्थानमेव मोक्षः।

एवं स्थितेषु अद्वैतसिद्धान्तेषु, अद्वैते भक्तिश्शक्यतेवैति क्वचित् संशयो भवति। भक्तेरशक्यतां वदतां विचारः एवं भवति –

1 अद्वैतानुसारं परमात्मा जीवाभिन्नश्चेत् तस्मिन्परमात्मनि भक्तिरशक्यैव स्वस्य स्वस्मिन् भक्त्यसम्भवात्।

2 स्वस्मिन्नपि भक्तिरुत्पद्यते इति तु भ्रम एव यतः द्वैतमूलायाः भक्तेः स्वस्मिन् सर्वथा असम्भव एव।

3 भक्तौ माहात्म्यज्ञानं कारणत्वेन स्वीक्रियते। परमात्मनः महत्त्वे ज्ञाते तत्कारणेन भक्तिरुत्पद्यते इति निश्चप्रचम्। जीवः असत्यसंकल्पाद्यनेकदोषाश्रयः। परमात्मा तु सत्यसंकल्पत्वादि गुणनिधानम्। यदि आत्मैव ब्रह्म तर्हि ब्रह्मणि आत्मनो दोषः प्रसज्येरन्। अतः तद्भानेन परमात्मनः महत्त्वस्य भानं प्रतिबध्यते।

4 अद्वैते तावद् ब्रह्मभिन्नं सर्वं मिथ्यात्वेन स्वीकृतम्। आत्मभिन्नस्य सर्वस्य मिथ्यात्वं जानतो भक्तिः कथं शक्या?

5 भक्तेः रसात्मकत्वे आनन्दरूपत्त्वात् तत्र सक्तस्य वैराग्यं न भवेत्। तदभावे च ब्रह्मभावः सुतरां नोपपद्येत।

6 अद्वैते ब्रह्म निर्धर्मकं स्वीकृतम्। निर्धर्मकत्वेन नीरूपत्वम् आपद्यते। नीरूपत्वेन च परमात्मनः सौंदर्यमेव न भवेत्। ततश्च भक्तिरसम्भवा। एतद्दोष–परिहाराय परमात्मनः रूपवत्त्व स्वीकारे तु अनित्यत्वादि दोषाः भवेयुः माहात्म्यज्ञानं च बाध्येत।

7 अद्वैतानुसारं निर्गुणे परमात्मनि भक्तिर्भवितुं नार्हति यतः निर्गुणे परमात्मनि भक्तेः कृते उपायाः न भवन्ति। परमात्मनः गुणकर्मादि श्रवणेन खलु भक्तिर्भवति। तच्च सगुणे परमात्मनि एव शक्यम्। शुद्धे तु गुणकर्मादीनाम् अभावः।[160]

एवम् अद्वैते भक्तेः शक्यताविषये आक्षेपेषु सत्सु नारायणतीर्थैः एतेषामाक्षेपाणामुत्तराणि दत्तानि, अद्वैते भक्तेश्च संभवविषये उपपत्तयश्च प्रदर्शिताः।

1 परमात्मा जीवाभिन्नश्चेत् जीवस्य परमात्मनि भक्तिर्न भवति। स्वस्यैव स्वस्मिन् भक्तिरयोगात् इति यदुक्तं तद्विषये नारायणतीर्थाः वदन्ति यत् मतमिदं भ्रान्तिकल्पितं यतः स्नेहविशेषरूपा भक्तिः अद्वैतज्ञानस्य प्रतिबन्धिका भवितुं नार्हति नाम अद्वैते स्वीक्रियमाणा भक्तिः स्नेहरूपा इति कारणेन अद्वैते सा शक्या।

2 भक्तौ माहात्म्यज्ञानं कारणम् अद्वैते च जीवगताः असत्यसंकल्पादयः दोषाः परमात्मनि प्रसज्य परमात्मनः माहात्म्यज्ञाने बाधिते भक्तिर्न

सम्भवति इति यदुक्तं तदपि वेदान्ताभिप्रायस्य अज्ञानकारणेन कल्पितम्। यतः 'आनन्दादयः प्रधानस्य' इत्यनेन ब्रह्मसूत्रेण जडप्रकृतेः आनन्दादि गुणवत्त्वं निषिध्य ब्रह्मणि तत्सर्वं साधितम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति च प्रतिपाद्य ब्रह्मणः नित्यसत्यत्वादयो रूपत्वेन स्वीकृताः। तेषां ज्ञाने सति माहात्म्यज्ञानं न प्रतिबध्येत तेन च भक्तौ प्रतिबन्धो न भवेत्। सत्यसंकल्पादि गुणविषये यदुक्तं तदपि तदभिप्राय ज्ञानाभावेन उक्तमेव यतः सत्यसंकल्पादयः गुणाः औपाधिकास्सन्तः सत्त्ववृत्तेराधिक्येन ब्रह्मणि स्वीक्रियन्ते। ते तु जीवभिन्नम् ईश्वरे एव अभिमताः अतः अद्वैते अपि माहात्म्यज्ञानं ततश्च भक्तिः शक्यते।

3. अद्वैते भक्तेराधारभूताः सेव्यसेवकभावः सुतरां नोपपन्नः एकस्मिन् अद्वितीये ब्रह्मणि द्वैताधारितोऽयं भावः अशक्यः इति केषाञ्चन शङ्का नारायणतीर्थैः इत्थं निराकृता यद् बहुभिः श्रुतिस्मृतिवाक्यैः उत्तमश्लोकस्यपरमात्मनः रसरूपत्वं परिच्छिन्नस्य जीवस्य तदवस्थायाम् अर्थात् साधनभक्ति–अवस्थायां सेवकभावः सूपपन्नः एव।

ये तावत् सेव्यसेवकभावं नाङ्गीकुर्वन्ति तेषां मते अभिन्ने पदार्थे अयं भावः अशक्यः यतः सेव्यं सेवकात् भिन्नं वा अभिन्नम्? अभिन्ने एकसत्वेन उभयाश्रितोऽयं भावः न शक्यते। भेदे तावत् स भेदः वास्तविकः उत अवास्तविकः इति विकल्पो भवति। भेदस्य वास्तविकत्वे सद्वितीयत्वेन अद्वैतहानिः।अवास्तविकत्वे सेव्यत्वमेव नोपपद्येत।

उपनिषद्वाक्यानाम् उपक्रमादिषड्विधलिङ्गबलेन अद्वितीये ब्रह्मणि तात्पर्यं निश्चितम्। श्रुतिस्तावद् ब्रह्मणः स्थूलसूक्ष्मरूपद्वयं परामृश्य, आकारविशेषञ्च कथयित्वा ततः नेति नेति इत्यज्ञाननिषेधेन

तत्कल्पितस्य सर्वस्यापि औपाधिकस्य निरसनेन तदधिष्ठानरूपेण सन्मात्रमेव उपस्थापयति।

4 अद्वैते ब्रह्मभिन्नस्य सर्वस्यापि मिथ्यात्वं निगदितम्। मिथ्यात्वं नाम भानविषयत्वम्। यस्य उत्पत्तिलयो स्तः तत्सर्वं मिथ्येति भणितम्। प्रतिपन्नोपाधौ प्रतिपन्नस्य त्रैकालिक–निषेध एव मिथ्यात्वेन स्वीकृतः। एवमेव ज्ञानबाध्यत्वं, स्वाश्रय–अभिमत–यावन्निष्ठ–अत्यन्ताभावप्रति–योगित्त्वं च मिथ्यात्वेन लक्षितम्। अर्थात् पटादिकार्यजात यस्मिन् प्रतिपद्यते तन्त्वादिषु तत्र तस्य पटादेः अभाव एव पटादेः मिथ्यात्वे प्रमाणम्।

अयं पटः मिथ्या भवितुमर्हति।

एतत् तन्तुनिष्ठत्वात्।

पटान्तरवत्

इति न्यायप्रयोगेण सर्वस्यापि कार्यजातस्य स्वोपादान कारणे अभावो भवति इति हेतोः कार्यं मिथ्या इति जगतः मिथ्यात्वम् अद्वैते प्रतिपादितम्।

एतादृशे दशावशेषे सर्वं मिथ्येति जानतो भक्तिः कथं स्यादिति आक्षेपस्य स्वरूपम्। एतत् समादधानैः नारायणतीर्थैः एवमुक्तम् – यद् यथा साधनदशायाः अध्यासात् जातस्य संस्कारस्य कारणेन लौकिक व्यवहारो विस्मृतिं गच्छति। तथा प्रपञ्चबाधोऽपि विस्मृतो भवति तेन भक्तौ जगद्बाधितमिति न स्फुरेत्। यतः भक्तिरसः परमानन्दरूपः अतः सः स्वेतरान् सर्वान प्रतिबध्नाति।

5 तथैव रागरूपायाः भक्तेः कारणेन अद्वैतसाक्षात्कारस्य कृते आवश्यकं वैराग्यं न भवेत् इति यः आक्षेपः वर्तते तद्विषये नारायणतीर्थाः वदन्ति, यद् तादृशं वैराग्यम् अभक्तानां कृते अवश्यमेव ग्राह्यं न तु भक्तानां कृते। जीवनमुक्तानामपि श्रुतिस्मृतिषु भगवद्भक्तिप्रतिपादनेन भक्तौ वैराग्याभावे न काचित् हानिः अतः भक्तेः वागरूपत्त्वात् अद्वैते वैराग्यप्रमुखे तदसम्भवः इत्याक्षेपः निस्सारः।

6 यदुक्तम् अद्वैते ब्रह्मणः रूपाभावात् सौन्दर्याभावे भक्तिः न सम्भवति, रूपवत्त्वे च अनित्यत्वदोषः भवति, तेन ईश्वरे माहात्म्यज्ञानं बाध्यते इत्यादि आक्षेपः यः दर्शितः सोऽपि असार एव। यतः परमात्मनि प्रकृत्यादि प्रवर्तकतया प्राकृतरूपाभावेऽपि सत्यज्ञानादि– अप्राकृत–रूपवशात् सौन्दर्यं भवति। तेन च भक्तिः शक्यैव। तथैव करचरणादिमति मत्स्यावतारादौ भक्तिर्भवितुमर्हति इति स्पष्टम्।

7 अद्वैते ब्रह्मनिर्गुणं स्वीकृतम् तस्मिन् उपाया एव न भवन्ति यतः निर्गुणस्य तत्त्वम् अवधारयितुम् उपायाः एव न भवन्ति। भक्तौ परमात्मनः गुणश्रवणं दिव्यकर्मश्रवणम् इत्यादयः उपायाः ये स्वीक्रियन्ते ते तावत् सगुणे एव परमात्मनि शक्याः। निर्गुणे परमात्मनि गुणानां कर्मणाञ्च अभावेन तत्पूर्वकमाहात्म्यज्ञानं ततश्च भक्तिः सुतरां न सम्भवति। अयं केषाञ्चन पक्षः नारायणतीर्थैः प्रस्तुतः यथायोग्यं खण्डितश्च।[161]

नारायणतीर्थानुसारं निर्गुणे परमात्मनि भक्तेरूपायो नाम अन्तःकरणवृत्तेः बाह्याकारता–निवृत्तिरेव अन्तःकरणं स्वभावतः चञ्चलं बहिर्गामि च। 'पराञ्चि–खानि व्यतृणत् स्वयंभूः। 'पराङ्पश्यति नान्तरात्मन्' इति कठोपनिषन्त्रेऽपि विषयोऽयं स्पष्टं प्रतिपादितः यत् अन्तःकरणे स्वभावेन बहिर्मुखं सत् अन्तरात्मानं न वीक्षते। परन्तु तादृशस्य अन्तःकरणस्य

बहिर्मुखतां पराहत्य तस्य परमात्मानं प्रति अभिमुखीकरणमेव भक्तेरूपायः। अतः निर्गुणस्य परमात्मनः भक्तौ अन्तःकरणस्य बहिराकारतानाशः एव उपायः इति नारायणतीर्थानां मतम्। अन्तःकरणस्य बाह्याकारतानिवृत्तिः श्रौतेन श्रवणादिना भवितुमर्हति तथा च श्रवणं मननं निदिध्यासनञ्च इति त्रयम् आत्मसाक्षात्कारसाधनरूपेण श्रुतौ विहितम्। अतः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्च' इति बृहदारण्यकोपनिषदि आत्मदर्शनोपायत्वेन दर्शनं विधाय श्रवणमनननिदिध्यासनानि तत्साधनरूपेण निर्दिष्टानि।श्रुतिवाक्येभ्यः आत्मस्वरूपश्रवणं भवति। 'मन्तव्यश्च उपपत्तिभिः' इत्युक्तरीत्या युक्तिभिः स्वस्य कृते आत्मस्वरूपनिर्धारणं मननं भवति। श्रवणेन अभावनारूप दोषो निवर्तते। मननेन च विपरीत–भावनारूपदोषो निवर्तते तथापि आत्मनो ज्ञानं परोक्षमेव भवति अतः पारोक्षरूपं दोषममुं दूरीकर्तुं निदिध्यासननामकः उपायः समाश्रयणीयः इति वेदान्तमतम्। परन्तु श्रवणादिसाधनाभ्यासः महते क्लेशाय कल्पते इति न तत् मन्दाधिकारिभिः अनुष्ठातुं शक्यम्। अत एव तदपेक्षया कश्चन सुलभ उपायः भक्तिरूपः शास्त्रेषु प्रदर्शितः।

भगवच्चरणसेवनकथामृतपान–इत्यादि–विविध भक्त्युपक्रम–पातवेन सगुणभक्तितः भगवदनुग्रहद्वारा कृतकृत्यता भवति इति नारायणतीर्थाः स्पष्टयन्ति।

नैरन्तर्येण परमात्मनः सेवा, नामभजनं, कीर्तनं तदन्य–साधनाश्रयणेन मनः शुद्धम् ईश्वरप्रवणञ्च भवति। एवं सगुणभक्तिः यदा परां काष्ठां प्राप्नोति तदा अन्तःकरणं बाह्यं सर्वं विस्मृत्य परमात्मनः चरणमात्रमाश्रित्य आस्वाद–अतिशयेन गुणानपि विस्मरति

सच्चिदानन्दैकरूपं परमात्मानमेव अनुभवति इति नारायणतीर्थाः विवृण्वन्ति।[162] अर्थात् यद्यपि सगुणभक्तिरेव प्रथमःसोपानः तथापि सगुणभक्तेः पराकाष्ठायां मनसो वृत्तिशून्यतायां गुणविस्मरणमपि भवति परन्तु तत्रापि आनन्दानुभवः अनुवर्तते इति कारणेन भक्तौ नोपायाभावः इति नारायणतीर्थमतम्।

**उपसंहारः**

एवम् अद्वैते भक्तेः शक्यताविषये विविधं विचार्य विभिन्नांश्च आक्षेपान् युक्तिपुरस्सरं समाधाय भक्तेः शक्यतां नारायणतीर्थाः एवं प्रत्यपादयन् –

1 भक्तिः सगुणाश्रिता चेदपि निर्गुणे परमानन्दरूपा सा शक्यैव।

2 जीवब्रह्मणोरभेदेऽपि साधनभक्तिरूपा शक्यैव।

3 जगतः मिथ्यात्वेऽपि परमात्मनः आनन्दरूपत्त्वात् तद्रूपा भक्तिः शक्यैव।

4 भक्तौ बाह्याकार–वृत्तिर्मनसः दूरीभवति अतः बाह्याकारतानिवृत्तिरेव भक्तौ उपायः।

**उत्क्रान्तिविचारः**

प्राणोत्क्रमणसमये उत्क्रमणमार्गः क–इति, कीदृशस्य जीवस्य कीदृशो वा मार्गो भवतीति च श्रुतिषु ब्रह्मसूत्रेषु च विशदतया वर्णितम्। नारायणतीर्थाः'**क्रमैकगत्युपपत्तेस्तु**'[163] सूत्रव्याख्यानसमये एतद्विषयिकीं चर्चां प्रास्तुवन्। परमात्मनः प्राप्तौ परिपक्वानुरागाणाम् अपक्वानाञ्च गतिर्भिन्नेति सूत्रार्थं विवृण्वद्भिः नारायणतीर्थैः तत्र मलिनानां व्यवधानेन भगवत्प्राप्तिर्भवतीति विशदीकृत्य ततः परम् '**उत्क्रान्तिवाक्यशेषाच्च**'[164] सूत्रस्य व्याख्याने सामान्यानां कर्मिणाम् उपासकानां ज्ञानिनाञ्च

गतिक्रमः चर्चितः। मरणकाले वागिन्द्रियवृत्तिः मनसि एकीभवति, मनोवृत्तिः प्राणेषु एकीभवति प्राणाश्च जीवे जीवो भूतसूक्ष्मेषु ततः हृदयाग्रप्रकाशेन प्रकाशित द्वारवान् उत्क्रामति इति शास्त्रीयः उत्क्रान्तिक्रमः कथितः।

तत्र अविद्वान् जीवः चक्षुरादिस्थानेभ्यः उत्क्रामति विद्वांस्तु उपासनामाहात्म्यात् ईश्वरानुग्रहेण सुषुम्नानाड्या उत्क्रामति सः उत्तरमार्गेण गच्छतीति श्रुतौ कथितम्।[165] आदौ अर्चिरदेवतां ततो दिनदेवतां ततः शुक्लपक्षदेवतां ततः उत्तरायणदेवतां ततः संवत्सरदेवतां ततः देवलोकं ततो वायुं ततः आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणलोकं ततः इन्द्रलोकं ततः प्रजापतिलोकं प्राप्नोति। तदा तत्र अमानवः कश्चनपुरुषः तं ब्रह्मलोकं प्रापयति इत्ययं देवयानरूपेण कथितो मार्गः। अयमेव ब्रह्ममार्गः।

कर्मिणान्तु दक्षिणो मार्गः पितृयानमिति कथितो भवति। कर्ममार्गी पुरुषः प्रथमं धूमाभिमानी देवतां ततो रात्रिदेवतां ततः कृष्णपक्षदेवतां ततो दक्षिणायनदेवतां ततः पितृलोकं ततः चन्द्रं प्राप्नोति। तत्र सः देवानां सेवाकर्मसु नियोज्यते एवं स्वकर्मफलानुसारं **'क्षीणे पुण्ये मर्त्यलोकं विशन्तीति'** शास्त्रानुसारं मर्त्यलोकाभिमुखः प्रथमम् आकाशेन एकीभूय ततो वायुना ततः वृष्टिद्वारा भूमिं प्राप्य अन्नरूपेण पुरुषे रेतोरूपेण स्थित्वा स्त्रियां बीजरूपेण सिक्तः तत्तत् जात्यनुसारं जन्म प्राप्नोति।

पापिनान्तु अयमारोहो वा अवरोहो वा न भवति तेषां तृतीयः कष्टतरो मार्गो यमलोके भवति। तत्र विविधनरकदुःखानि भुक्त्वा कीटादीरूपेण पुनर्जन्म प्राप्नोतीति शास्त्रीयः कर्मः नारायणतीर्थैः स्वव्याख्याने विपुली कृतः।[166]

## जीवब्रह्मणोः सम्बन्धविचारः

जीवब्रह्मणोः सम्बन्धविषये दर्शनेषु मतभेदो दृश्यत एव। केचन जीवः ब्रह्मणो भिन्न इति वदन्ति चेत् अपरे जीवस्य ब्रह्मणो भेदाभेदं कथयन्ति। एवं जीवस्य ब्रह्मणः अभेदम् अद्वैतिनस्स्वीकुर्वन्ति। एवं मतभेदे स्थिते शाण्डिल्यसूत्रेऽपि[167] सूत्रेषु तद्विचारः कृतः। काश्यपमतानुसारं जीवब्रह्मणोरत्यन्तं भेदः '**द्वा सुपर्णा सयुजा सखाया**' इति श्रुतिसिद्ध[168]।यतः ईश्वरः परत्वात् जीवात् भिन्नः परन्तु बादरायणमते जीवः ब्रह्मणो अभिन्न एव '**तत्त्वमसि**' '**ब्रह्मास्मि**' इत्यादि श्रुतयस्तादृशमेवाभेदं प्रतिपादयन्ति। परन्तु '**द्वा सुपर्णा** इ. श्रुतिः लोकप्रसिद्धमेव जीवब्रह्मभेदम् अनूद्य तस्य भेदस्य मिथ्यात्वं '**नेह नानास्ति किञ्चन**' इति प्रतिपादयति। अत्र नारायणतीर्थाः'**तमेव विदित्वा**' इति श्रुतिवाक्यम् आद्धृत्य सगुणोपासनस्यापि मोक्षहेतुत्वमस्तीति मतं निराकृत्य ईश्वरस्य ऐश्वर्यमपि काल्पनिकमेवेति दर्शयन्ति। परन्तु काश्यपमते दासोऽहमिति बुद्धिः, बादरायणमते सोऽहमिति बुद्धिः पर्यवस्यति अनयोः कतरा बुद्धिः गरीयसीति प्रश्ने शाण्डिल्यमतानुसारं भेदविषया अभेदविषया च बुद्धिः भेदाभेदाश्रुतिप्रमाणतः भवितुमर्हतीति नारायणतीर्थाः साधयन्ति। अत्र विशिष्य केवलयोः अभेदः विशिष्टयोरेव भेदः इति प्रतिपादयन्ति। विशिष्टयोर्भेदे प्रमाणमपि वर्तते अन्यथा तयोः विशेषणत्वमेव न भवेत् अतः विशिष्टयोर्भेदः केवलयोरभेदः इति वेदान्तानुसारं शाण्डिल्यमतं विवृण्वन्ति।[169]

एवं जीवब्रह्मणोरभेदे जीवगतक्लेशाः ब्रह्मण्यपि प्रयज्येरन् तेन च जीव इव ईश्वरोऽपि क्लिष्टः स्यात् इति शङ्कां मनसिकृत्य शाण्डिल्यः '**न च**

**क्लिष्टः परः स्यात्**[170] इत्यादिना सूत्रयामास यतः स्वसङ्कल्पकृत – उपाधितारतम्यात् जीवब्रह्मणोः साम्येऽपि ज्ञानादिशक्तिमान् स्वतः पूर्णोऽपि भगवान् स्वसङ्कल्पकृत चित्ताद्युपाध्यनन्तरं विरूद्धानेकधर्मवान् भवति। सर्वथा भेदे जीवस्य कदापि ज्ञानेन ब्रह्मभावो न भवेत् तेन च 'ब्रह्मविद् ब्रह्मैव भवतीति' श्रुति व्याकुप्येत।

अस्मिन्प्रसङ्गे नारायणतीर्थाः श्रुतिप्रमाणेन स्वमतं प्रस्तुत्य ततः परं भगवद्रामानुजानां मतमुपस्थाप्य तस्य अनङ्गीकार्यत्वं प्रत्यपादयन्।

श्रीमाद्रामानुजाचार्याः विशिष्टाद्वैतमतप्रवर्तकाः जीवाः बहवः भोक्तारः इति ईश्वरः एकः प्रयोजकश्च इति च स्वसिद्धान्तं प्रतिपादयन्ति। तेषां मते तावत् भेदाभेदयोः विरोधोऽस्ति। अतः जीवब्रह्मणोः शुद्धाभेदः अशक्य एव। तथैव परिणामानां फेनबुद्बुदादीनां नाशेऽपि न परिणामिनो जलस्य विकारवत्वमेवम् ईशपरिणामानां तदविनाभूतानां विकारवत्वेऽपि सदैकरूपस्य ईश्वरस्य न विकारवत्वम् इत्यपि व्याख्यायते। शुद्धाभेदे स्वर्गनरकादिव्यवस्था सेव्यसेवकभावादि मर्यादा व्याकुला स्यात्। उपाधिवशात् भेदः भवति चेदपि वस्तुतस्त्वभेद इति अद्वैतमतं ते नाङ्गीकुर्वन्ति। स्वतः परिपूर्णस्य स्वतन्त्रस्य ब्रह्मणः तादृशपरिच्छेदो न सम्भवति। 'सदेव सोम्य' इत्युपक्रम्य एकमेवाद्वितीयं इत्यादिना च शुद्धैक्यं बोधयन्ती श्रुतीः मध्ये ब्रह्मण जीवात्मत्वं कथयति। अन्ते तत्त्वमसीत्यादिना शुद्धाभेदेन उपसंहरति क्वचित् 'मृत्योः स मृत्युमाप्नोतीति' च भेदं निन्द्यति अतः अभेदश्रुतिरेव बलवतीति अद्वैतसम्मतम् रामानुजीयाः न स्वीकुर्वन्ति। जीवब्रह्मणोरभेदे बन्धमोक्षव्यवस्था न सिद्धयेत्। भेदश्रुतेः स्वरूपतः भेद एव तात्पर्यम्। भेदनिन्दावाक्यानि तु वैधर्म्यलक्षणभेदस्य निन्दापराणि। भेदे प्रत्यक्षम्

अनुमानं श्रुतिर्वा न सम्भवतीति न वक्तव्यम्। प्रत्यक्षादिना भेदे वितते अभेदश्रुतीनां गौणाभेद एव अर्थः इति रामानुजीयाः वर्णयन्ति।

नारायणतीर्थानां मतानुसारं तत्त्वमेव इत्यादिवाक्ये श्रूयमाणस्य 'एवं'कारस्य कैवल्यमेवार्थः। स च शुद्धाभेदः। अत एव बृहदारण्यके एक विज्ञानेन सर्व विज्ञानमुपक्रम्य अविद्याकृतमेव द्वैतदर्शनमिति प्रतिपाद्य तत् ज्ञानबाध्यमिति अद्वैतज्ञानस्यैव मोक्षजनकत्वं प्रतिपादितम्। सर्वोऽपि जीवब्रह्मणोर्भेदः मिथ्यैव। श्रुतिवाक्येषु अद्वैतं कष्टगम्यमिति सद्गुरूकृपाद्युपायैः ज्ञातव्यमिति च बोध्यते। अतः भेदनिन्दावाक्यैः वैधर्म्यं निन्द्यते न तु भेद इति अन्योन्याभावरूपो भेदः 'द्वासुपर्णा' इत्यादि श्रुतिसिद्ध इति च रामानुजीयमतं यदुपस्थापितं तद् न साधीयः इति नारायणतीर्थाः वर्णयन्ति। यद्यपि सः भेदः श्रुतिप्रमित इति भाति तथापि अपूर्वत्वलिङ्गबाधोन न स स्वीक्रियते। अभेदश्रुतेस्तु अज्ञातज्ञापकत्वेन प्रामाण्यमस्ति। परम्परया उपाध्यवच्छेद्यं ब्रह्म शुद्धं नित्यञ्च इति अद्वैतवेदान्तसिद्धान्तः। अस्मिन् मते तवत् सर्व उपाधयः मिथ्यैव विशिष्टमिथ्यात्वञ्च नाङ्गीकृतम् अतः अद्वैतपक्षानुसारं व्याख्यानमेव साधीयः इति नारायणतीर्थाः निरूपयन्ति।[171]एवं रामानुजमतविमर्शपूर्वकम् अद्वैतानुसारं सूत्रं व्याख्याय ईश्वरगीताप्रमाणेन प्रपञ्चमिथ्यात्वमेव ते दर्शयन्ति। तथापि भेदाभेदवादः प्रपञ्चसत्यत्वमिथ्यात्ववादश्च संज्ञाकलहमात्रमित्युक्त्वा सर्वमतेऽपि प्रपञ्चः अनित्यः मुक्तस्य च प्रपञ्चाभावः इत्येव सिद्धान्त इति नारायणतीर्थाः शास्त्रविषयं समन्वयन्ति। अपि च स्वमतमेवमाविष्कुर्वन्ति[172]—

परमात्मा 'नित्यज्ञानादिलक्षणः भगवान् सदैकरूपः भक्तवात्सल्याद्यनेक गुणोल्बणः ब्रह्मविष्णुशिवनारायण रामकृष्णादि शब्दव्यपदेश्यः सर्वजीवनियन्ता। जीवस्तु पुत्र इव भगवदंशः अनाद्यज्ञानपाशबद्धः कथञ्चित् प्राक्तनानेकशुभादृष्टबलात् विविदिशया सद्गुरू आश्रयणेन ईश्वरबुद्ध्या तद्भजनेन तत्कृपया स्वस्य साक्षात्कारात् अज्ञानपाशनिवृत्त्या भगवत्सायुज्यमाप्नोति तदा तत्र न प्रपञ्चगन्धोऽपि इत्यस्मिन्विषये न कस्यापि विवादः'[173] इत्येवं शास्त्ररहस्यं समाकलय्य स्वव्याख्याने विशदयामासुः।

**प्रकृतेःब्रह्मणश्च सम्बन्धः**

'**प्रकृत्यन्तरालात्**'[174]इत्यस्मिन् सूत्रे ईश्वरः मायाशक्तिद्वारा कार्यं करातीति हेतोः स्वयमविकारी तिष्ठति यतः तस्य स्फुरणरूपसत्ता सर्वत्रानुगता भवति। स्वयमेव विकारित्वे तस्य विकारसाक्षिता न स्यादिति नारायणतीर्थाः स्पष्टयन्ति। अत एव व्याख्यानान्ते ब्रह्म विवर्तोपादानमेव जगतः न तु परिणाम्युपादानमिति ते विशदयन्ति। एवं प्रकृतिरिति मायाशक्तिद्वारा ब्रह्म स्वयमविकारि सत् जगतः कारणं भवतीति भावः। तादृशे ब्रह्मणि सर्वस्य विकारस्य प्रतिष्ठा तदुत्तरसूत्रे कथिता। यथा गृहमध्यस्थितेपीठेस्थितोऽपि गृहे तिष्ठति पीठे तिष्ठतीति कथ्यते तथैव ब्रह्मणि मायायाञ्च सर्वं तिष्ठति इति वक्तुं शक्यम्।[175] अत्र तादृशरचनासामर्थ्यं ब्रह्मणोर्वा प्रकृतेर्वा कल्पनीयं तेन च एकतरम् अन्यथासिद्धं स्यादिति शङ्कामपाकर्तुं शाण्डिल्यमहर्षिणा सूत्रितम् –

'**मिथोऽपेक्षणादुभयम्**'[176] अर्थात् ब्रह्मप्रकृतिश्च उभयमपि सृष्टिकारणमिति शाण्डिल्यमतं यतः चेतनाचेतने द्वे अपि स्वसामर्थ्यसम्पादनाय परस्परमपेक्षेते। अनयोः को वा सम्बन्धेति जिज्ञासायां तौ प्रकृतिपुरुषौ

परस्परं सम्बद्धौ अनादिकालतः इत्येव सम्प्रदायः। सा च प्रकृतिः ब्रह्मणः शक्तिरेव ब्रह्मनिष्ठ–सर्वकर्तृता–सामर्थ्यरूपा। यथा वह्नेः दाहादिजनन–सामर्थ्यं वह्निरूपमेव तथा प्रकृतिरपि ब्रह्मणः शक्तिः। इत्येवं प्रकृतिब्रह्मणोः स्वरूपं सूत्राधारेण भक्तिसंप्रदायानुसारं नारायणतीर्थैः प्रतिपादितम्। अत्र च विशेषतः प्रकृतेः ब्रह्मशक्तिरूपत्व–निरूपणे तैः अद्वैतसिद्धान्तानुसारं भावाद्वैतस्वीकारेण सिद्धान्तः प्रतिपादितः।

एतस्याः प्रकृतेः परिणामरूपेण भासमानं द्वैतजगत् तत्स्वरूप तत् शक्तिकृतं सैव भिन्नाभिन्ना अनिर्वाच्या च भवति। जडेषु दृश्यमात्रेषे कारणरूपेण तस्याः अन्वयात् सैवजगत्कारणमिति सूत्रे प्रतिपादितम्।

**कर्मविचारः**

'**उत्कान्तिवाक्यशेषाच्च**'[177] इत्यस्य सूत्रस्य व्याख्याने नारायणतीर्थैः महता परिकरेण कर्मविचारः प्रस्तुतः। तत्र च शुभाशुभकर्मिणां देवलोकगमनादिकम् उत्क्रान्तिवर्णनपुरस्सरं वर्णनं कृतम्। तत्र सदसत्कर्मणोः तत्तद् वासना एव प्रवर्तकाः। सदसद्वासनयोः समुन्मेषेण सदसदनुस्मरणं जायते ततः तत्तत् वासनानुगुणकर्म प्रति औन्मुख्यं जायते ततश्च कर्मणः शुभाशुभफलप्राप्तिरिति कर्म तत्फलनियमञ्च नारायणतीर्थाः विशदयामासुः। तत्रापि तत्फलदं कर्म कतिविधमिति जिज्ञासायां प्रायः शास्त्रे आगामीप्रारब्धसञ्चितरूपेण त्रिविधस्य कर्मणः उल्लेखो दृश्यते योगशास्त्रे च कृष्णकर्म,शुक्लकर्म,शुक्लकृष्णकर्म, अशुक्लाकृष्ण कर्मेति कर्मणश्चातुर्विध्यं कथितम्। योगिनः कर्म अशुक्लाकृष्णमिति कथयित्वा त्रिविधं कर्म इतरेषामिति पतञ्जलिमहर्षिणा सूत्रितम्।[178]

नारायणतीर्थैस्तावत् प्रकृतसन्दर्भानुसारं गुणत्रयप्रेरितं कर्म षड्विधमिति व्याख्यातम्। सत्त्वरजस्तमसां व्यत्ययेन कर्मणः षट्प्रकाराः भवन्तीति ततो ज्ञायते।[179] ते प्रकाराश्चेत्थम्।

1 केवलसात्विकम्

यथा भगवद्ध्यानादिकम् एतादृशं कर्म पूर्णतः सकलपापहरं भवतीत्यतः केवलसात्विककर्मेति कथ्यते।

2 सात्त्विकराजसम्

यस्मिन्कर्मणि सत्त्वरजसोः समंशः भवति तत्कर्म सात्विकराजसं यथा हिंसारहितं कायक्लेशाद्युक्तं सन्ध्यावन्दनादि कर्म।

3 सात्त्विकतामसम्

यस्मिन्कर्मणि सत्वतमसोः समांशो भवति तत्कर्म सात्विकतामसं यथा हिंसायुक्तं नित्यकर्म।

4 राजसम्

यस्मिन्कर्मणि रजोगुणस्यैव प्राधान्यं भवति तत्कर्मराजसम्। यथा हिंसारहितं काम्यं कर्म येन कर्मफलभोगानुकूलं चित्तनैर्मल्यं जायते परन्तु पापो न नश्यति।

5 राजसतामसम्

यस्मिन्कर्मणि रजस्तमसोः समांशो भवति तत् राजसतामस कर्म। यथा हिंसायुक्तं काम्यकर्म। एतद् भोगानुकूलं चित्तनैर्मल्यं साधयति चेदपि दुःखसहितसुखसाधकमपि भवति।

6 तामसम्

यस्मिन्कर्मणि तमोगुणस्यैवाधिक्यं भवति तत्कर्म तामसम्। यथा शास्त्रनिषिद्धं यद्यद् कर्म तत्सर्वं दुःखैकसाधनं चित्तकालुष्य कर्म।

इत्येवं कर्मणः षट्प्रकारान् प्रतिपाद्य तत्र अभ्यासेन असद्वासनाः दूरीकृत्य शुभवासनानां वृद्ध्या सत्कर्मणि प्रवृत्तो भवितुमर्हति तत्फलञ्च प्राप्नोतीति नारायणतीर्थाः वर्णयन्ति। असद्वासना शुभकर्म न नाशयति किन्तु तत्केवलमभिभावयति। एतदेव सत्कम् प्राणोत्क्रमणकाले फलोन्मुखं सत्स्मरणेन युक्तं तदनुकूलं लोकङ्गमयति तथैवासत्कर्म। अतः सद्वासनादृढत्वं प्रयत्नविशेषेण सम्पादनीयमेवेति नारायणतीर्थानां निष्कर्षः। अतः ते न केवलं दैवे भारंन्यस्य स्वभाग्यं न निन्दन्ति न वा स्वपौरुषे निषिधन्ति। उभयमपि श्रेयसे अनुष्ठेयमित्येव तेषां मतम् अत एव माघकाव्येऽपि –

**नालम्बते दैष्टिकतां न निषीदति पौरुषे।**

**शब्दार्थौ सद्कविरिव द्वयं विद्वान् अपेक्षते।।**[180]

अतः केवलादृष्टे एव भारक्षेपस्य अनौचित्यं ते वदन्ति। अतः पुरुषप्रयत्नेन सत्सङ्गत्या सत्कर्मादिप्रवृत्तिः असद्कर्मादेः निवृत्तिश्च घटत इति तेषां निष्कर्षः।[181]

### वैदिकहिंसा

ईश्वरः पितृवत् सर्वपालक इति कथिते सति शङ्केयं जायते यत् हिंसायुक्तमागमं प्रवर्तयन् ईश्वरः पितृतुल्यः कथं भवेदिति। अतः ईश्वरस्य पितृतुल्यत्वं साधयितुं शाण्डिल्यमहर्षिणा यज्ञहिंसायाः विषये चर्चा सूत्ररूपेणोपस्थाप्यते '**निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत्**'[182] इति। किन्तु अस्मिन् मते आक्षेपं कुर्वन्तः पूर्वपक्षिणः मिश्रोपदेशात् पितृवत्

न इति वदन्ति।[183] तेषां मते पापार्थं साधनीभूतं हिंसादिमिश्रितं कर्म दृष्ट्वा ब्रह्मा अहितोपदेशकारी अस्ति अत एव स पितृवद्धितकारीति वक्तुं न शक्यते।

अस्मिन्विषये नारायणतीर्थाः समादधति यद् इष्टसाधन कर्मापेक्षया अर्थात् ज्योतिष्टोमेन प्राप्यमाणात् स्वर्गाद्यपेक्षया ज्योतिष्टोमान्तर्गतायाः हिंसायाः अल्पानिष्टफलरूपत्वं विद्यते। अतः मिश्रोपदेशादपि ब्रह्मा पितृवद्धितकारी एव अस्ति।[184]

केषाञ्चन मते '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यस्मिन् विधिवाक्ये अग्नीषोमीयं पशुमालभेत इत्यपि विधिः आयाति एतद् वाक्यमनुसृत्य वैदिकवाक्येषु हिंसायाः विधानं दृश्यते तस्माच्च वेदमात्रादेव धर्माधर्मयोः निर्णयो यदि भवति तर्हि तेषां वैदिकवाक्यानामस्मिन्सन्दर्भे अधर्मसाधनत्वं सिध्यति।

एतां शङ्कां निराकर्तुं नारायणतीर्थाः वैदिकमन्त्रमेव उपस्थापयन्ति– 'यत्पशुर्मायुमकृतोरो वापद्भिराहत अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्व हसः' इति, वदन्ति च एतस्मात् मन्त्रात् अंहसः अर्थात् संज्ञपनरूपिणः अंहसः पापात् मोचयतु इत्यनेन आशयेन मन्त्रेषु अर्थवादेषु पुराणेषु च हिंसायाः अधर्मसाधनत्वमेव प्रतिपादितम् अपि च भगवद्गीतायामपि '**श्रेयान्द्रयमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप**'[185] इत्यनेन वाक्येन हिंसायाः योगेन विधियज्ञस्य निन्दैव ज्ञापिता। केषाञ्चन मतं दृष्ट्वापि हिंसायाः निरवकाशः अहिंसायाः अवकाशः एव वैदिकवाक्येषूपलभ्यते। अर्थात् हिंसाविधायक वाक्यानामपेक्षया हिंसानिषेधवाक्यानि एव सर्वस्मिन् वेदे प्राप्यन्ते।

यज्ञबाह्यहिंसायाः प्रतिषेधः, यज्ञान्तर्गतायाः हिंसायाः अपवादात्मक–विधिवाक्यानि वेदेषूपलभ्यन्ते तस्मात् यज्ञबाह्यहिंसानिषेधः यज्ञीयहिंसाविधायकत्वञ्च सिध्यति।

यज्ञीयहिंसाविषयकं सूत्रकारमतं दृढीकर्तुं भगवद्वाक्यमुद्धरन्ति नारायणतीर्थाः'**त्याज्यं दोषवदित्येके**' इति। एतस्माद्वाक्यात् कर्मत्यागः कैश्चिद् विद्वद्भिः पुरस्कृतश्चेदपि भगवान् अर्जुनं '**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्**' '**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्**' इत्यादिभिः वाक्यैः यज्ञं कर्तव्यरूपेणैव उपदिशति।[186] अत एव यज्ञे कृता हिंसा अहिंसारूपिण्येव मन्तव्या। वैदिकवाक्येषु प्राप्यमाणः विधिः अर्थात् 'यजेत' इत्यत्र पापसाधनहिंसायाः उल्लेखः भवति चेदपि स तु निष्प्रयोजनं न भवति सप्रयोजनमेव, अतः विशेषविधिः अर्थात् यज्ञीयहिंसा सामान्यनिषेधरूपतया अर्थात् यज्ञबाह्यहिंसायाः निषेधेन, कर्तव्यरूपेण स्वीकर्तव्ये भवति। महाभारतादौ या हिंसायुक्तयज्ञस्य निन्दा दृश्यते तत्तु अहिंसायुक्तस्य कर्मणः स्तुत्यर्थमेव अस्ति।

यज्ञीयहिंसासन्दर्भे अपरोऽपि कश्चनविषयोऽवधेयो भवति यत् वेदः साक्षात् यज्ञं विधेयत्वेन दर्शयति यज्ञे च हिंसा भवति तर्हि हिंसायुक्तस्य यज्ञस्य अनुष्ठानं वदन् वेदः प्रमाणं भवेत् वा इति। अङ्गविधिषु वर्तमानां हिंसां वर्जयित्वा अङ्गविधिः पूर्णो न भवति। अङ्गविधिना–प्रधानं कर्म–पूर्णं न भवति। ज्योतिष्टोमरूपः प्रधानविधिः साङ्ग एव फलप्रदायी भवति। एवं प्रधानविधिपरिपूर्णताया कृते हिंसारूपस्य अङ्गविधेः अवश्यकरणीयत्त्वं भवति। अतः यद्यपि हिंसानिषेधः पुरुषार्थरूपेण अग्नीषोमीय हिंसायामपि प्रवर्तते तथापि ज्योतिष्टोमविधिः तत्र तं निषेधं निरुणद्धि।[187] यतः अग्नीषोमीयहिंसां वर्जयित्वा प्रधानविधेः

ज्योतिष्टोमस्य अनुष्ठानं शक्यं न भवति। यदि अग्नीषोमीयहिंसायामपि निषेधस्य प्रवृत्तिर्भवेत् तर्हि ज्योतिष्टोमरूप प्रधानविधिरेव बाध्येत। अथ च यस्य अङ्गकर्म निषिद्धं तादृशेन प्रधानेन अनिष्टमेव भवति इति कारणेन साङ्गं प्रधानं फलदायि इति वक्तव्यम्।

अत्र अङ्गरहितस्य प्रधानस्य फलजनकत्वमपि वक्तुं न शक्यते, यतः साङ्गमेव कर्म फलदमिति शास्त्ररीतिः। अतः यज्ञबाह्यहिंसायाः दुष्टत्वं यज्ञीयहिंसायाश्च क्रतुपुरुषोभयोपकारकत्त्वं स्वीक्रियते इति किञ्चन मतं प्रस्तुत्य नारायणतीर्थाः तस्य विवेचनं प्रास्तुवन्।

यद्यपि हिंसा न करणीया इति निषेधशास्त्रं ज्ञात्वा सर्वविधाहिंसा अर्थसाधनं इति बोध्यते तथापि या हिंसा यागस्य कृते विहिता सैव यागोपकारिका इति तादृशहिंसाघटितप्रधानयागेनैव स्वर्गादिफलम–वाप्यते इति च ज्ञाने बाधकं न भवति। एवं हि यज्ञीयहिंसायाः क्रतूपकारकत्वात् वैधत्वं स्पष्ट भवति। परन्तु हिंसा अनर्थकारणम् इति हेतोः यज्ञगतहिंसापि अनर्थकारणमिति ज्ञानं भवति चेत् तादृश–अनिष्ट–फलसाधनं प्रधानं कर्म कथं वा प्रवर्तनाविषयो भवेत् यतः बलवदनिष्ठ–अननुबन्धीष्टसाधनत्वं हि लिङ्गप्रत्ययार्थः यदि एवं शङ्क्येत यद् प्रधानकर्मस्थलेऽपि प्रवर्तना अनिष्टसाधनम् आक्षिपेत् परन्तु इयं शङ्का अस्मिन् सन्दर्भे न साधीयसी यतः यत्किञ्चिदनर्थहेतुत्वेऽपि हिंसायाः, प्रधानकर्मणि प्रवृत्तिः स्वर्गादिप्रधानफलं प्रति रागातिशयवशादुपपद्यते अर्थात् यः कश्चन अनर्थः भवति चेदपि साङ्गं प्रधानं कर्म स्वर्गरूपं फलं प्रयच्छति इति निश्चयात् तादृशकर्मणि प्रवृत्तिर्भवितुमर्हति।

अतः न हिंस्यात् इति साधारणनिषेधशास्त्रं सर्वत्र प्रवर्तिते चेदपि तदपवादरूपेण यज्ञीयहिंसा तदबाधिता प्रवर्तते इति यज्ञीयहिंसायाः विषये नारायणतीर्थाः स्पष्टं स्वमतं प्राकटयन्।[188]

**स्वतन्त्रा भक्तिः मोक्षकारणं भवितुमर्हति**

भक्तिज्ञानयोः परस्परतुलनां कृत्वा नारायणतीर्थाः विषयममुं प्रतिपदयामासुः।

**न मां जानन्ति मुनयो योगिनश्च कथञ्चन।**

**न च रुद्रादयो देवा यथा गोप्यो विदन्ति माम्।।**

**वेदान्तिनोऽपि मुनयो न मां जानन्ति तत्त्वतः।**

**यथा ता गोपसुदृशो मम जानन्ति वैभवम्।।**[189]

इत्यादिभिः पुराणवाक्यैः ज्ञानं विनापि भक्तिमात्रतः एव गोप्यः भगवन्तं तत्त्वतः विदन्ति इति स्पष्टं ज्ञायते। तत्रापि श्रुत्या यासां गोपीनामुल्लेखः कृतः ता एव भगवन्तमधिगच्छन्ति न सर्वाः। अर्थात् याभिः भक्त्या भगवदनुग्रहः प्राप्तः ता एव इति नारायणतीर्थैः अत्र समुल्लिखिताः। नारायणतीर्थाः ज्ञानस्य प्रेम्णः च विषये तुलनात्मकरीत्या हेतून् प्रतिपाद्य भक्तिः कैवल्यार्थं स्वतन्त्ररूपेण कारणं भवति इति स्पष्टीकुर्वन्ति यथा ज्ञानवन्तः ज्ञानस्य कैवल्यं प्रति हेतुतां मन्यन्ते तथैव प्रेम्णः अपि वैजात्यंमन्तर्भाव्य तस्य कैवल्यं प्रति हेतुता सिद्धीकुर्वन्ति यथा ज्ञानस्य मनोनाशादिकं प्रति हेतुत्त्वं भवति तथैव भगवद्गुणज्ञानजन्यतदनुरागस्य तच्चिन्तनपरम्परारूप–निदिध्यासनं प्रति हेतुत्त्वं भवति, अतः ज्ञानं भक्तिर्वा संगच्छते तथापि ज्ञानयोगकर्मेत्यादिभिः विविधैः साधनैः साध्या या अविद्यानिवृत्तिसमकालिका रतिः पराभक्तिर्वा सैव ब्रह्मावाप्तिहेतुर्भवति

इति स्वमतमुपस्थापयन्ति। अत्र केचन आशङ्कां कुर्वन्तियद् 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्येतस्मात् भक्तिः कैवल्यप्राप्तौ ज्ञानद्वारैव हेतुर्भवति इति ज्ञायते, यतोहि आदौ भक्तिः तस्मादनन्तरं ज्ञानं तस्मात् मोक्षः इत्ययं क्रमः प्राप्यते। अतः साक्षात्साधनं ज्ञानं, व्यवहितं च साधनं भक्तिः इति स्पष्टम्।

एतामाशङ्कां सूत्रमुदाहृत्य परिहरन्ति 'तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत्' इति। सूत्रेऽस्मिन् प्रपत्तिशब्दविषये नारायणतीर्थैः विचारः कृतः तदनुसारं प्रपत्तिर्नाम न प्राप्तिः अपि तु भक्तिरेव अर्थात् 'ज्ञानवान् मां प्रपद्यते' इत्यत्र ज्ञानवान् मां प्राप्नोति इति नार्थः ज्ञानवान् मां भजते इत्येव भक्तिसंप्रदायविदां मतम्। केवलाद्वैते तावत् प्रपद्यते इत्यस्य प्राप्नोति इत्येव अर्थं दर्शयित्वा ज्ञानस्य साक्षान्मोक्षसाधनत्वं समर्थितम्। शाङ्करभाष्ये तावत् प्रपद्यते इत्यस्य प्रत्यक्षतः प्रपद्यते इत्युक्त्वा प्राप्त्यर्थकत्वं दर्शितम्। परन्तु रामानुजमते प्रपत्तिः प्रपदनम् इत्यर्थं दर्शयित्वा प्रपत्तेः भक्तिरूपत्वमेव दर्शितम्। नारायणतीर्थाः भक्तिसम्प्रदायमेवाश्रित्य प्रपत्तिशब्दस्य भक्तिपरकत्त्वमेव समर्थयामासुः। अस्मिन्नर्थे उपपत्तिरपि तैः प्रदर्शिता –

1 एतस्मात् श्लोकादनन्तरं कामैस्तैसैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः इत्यनेन श्लोकेन भक्तिरित्यर्थे एव प्रपत्तिशब्दो दर्शितः। देवतान्तर –प्रतिपत्ति – निन्दां कृत्वा परमात्मा स्वप्रतिपत्तिमेव प्रस्तौति। अत्र अन्यदेवताभीतिः स्वभक्तिश्च इत्येव अर्थो ग्राह्यः। अतः प्रपत्तिशब्दः न ज्ञानपरः न वा प्राप्तिपरः।

2 इतश्च अग्रे तं तं नियममास्थाय इति च यद्वाक्यं वर्तते तदनुसारमपि प्रपत्तिशब्दस्य प्रपत्तिपरकत्त्वमेव योग्यतरम्। तं तं नियममाश्रित्य ते

स्वकामनाभिः प्रेरिताः **मामेव यजन्ते** इति वाक्यस्वारस्येन ज्ञायते। अत्र उपपत्तिद्वयेनापि प्रपत्तिशब्दस्य उभयत्रापि भक्तिरेवार्थः इति नारायणतीर्थैः संसाधितम्।

एवञ्च तेषामनुसारं भक्तितः ज्ञानश्रवणं तु साधनभक्तिपरतया नेयम्।

'तमेव विदित्वा' इत्यादीनां श्रुतीनां पर्यालोचनेनापि भक्तिः अव्यवहितसाधनमस्ति ज्ञानञ्च व्यवहितम् इत्येव सिध्यति। ज्ञानमेव भक्तिद्वारा मोक्षहेतुर्भवति। 'नान्यः पन्थाः' इत्यनया श्रुत्यापि कैवल्याप्राप्तौ कर्माऽऽदेः साधनत्त्वं व्यवच्छिद्यते न तु भक्तेः इति नारायणतीर्थानां मतम्। चक्षुषा पश्यतीत्युक्ते प्रमाणान्तरस्यैव व्यवच्छेदः न तु सम्बन्धस्य तथैव कैवल्यप्राप्तौ भक्तिं विहाय अन्यप्रमाणानां व्यवच्छेदः कृतः यथा चक्षुषा एव दर्शनं शक्यं तथैव भक्त्या एव कैवल्यप्राप्तिः इति एष सम्बन्धः नारायणतीर्थैः स्वमतस्थापनाय प्रदर्शितः।

एवं '**सा मुख्येतराऽपेक्षितत्त्वात्**'[190], '**प्रकरणात्**'[191] इत्यादिभिस्सुत्रैः भक्तेः मुख्यत्वं ज्ञानस्य च अङ्गत्त्वं सिद्धीकुर्वन्त्याचार्याः। तेषां मतमनुसृत्य आत्मज्ञानयोगगौणभक्तिभिः साध्यरूपेण भक्तिरेव अपेक्षिता इति ज्ञायते।

छान्दोग्ये '**यो वै भूमा तत्सुखम्**' इत्यादिना आरभ्य आत्मैवेदं सर्वमिति। '**स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति**' इत्यादिनां 'पश्यन्' इत्यनेन साधनभक्तेः, 'मन्वान' इत्यनेन पदेन योगस्य, 'विजानन्' इत्यनेन पदेन ज्ञानस्य च ग्रहणं दर्शितमाचार्यैः। साधनभक्त्या योगेन ज्ञानेन च **आत्मक्रीड–आत्ममिथुनेत्यादिभिश्शब्दैः** साध्य भक्तेरेवोल्लेखः कृतः तस्याः एव स्वाराज्यफलमुक्तम् इति अतः सैव प्रधाना इति स्पष्टं भवति।

परन्तु यद्यत्र आत्मरतिः अत्मक्रीड इत्यादिभिश्शब्दैः आत्मरतमेवाधिकारिविशेषणं स्वीक्रियते तर्हि आत्मरतस्थैव प्राधान्यं भवेत् न तु रतेः इति अनुभाष्यतन्मतं सूत्रकाराः दूषयन्ति '**प्रकरणात्**' इत्यनेन सूत्रेण, प्रयाजस्योदाहरणेन समर्थयन्ति च। यथा 'अभिक्रामं जुहोति' इत्यत्र प्रकरणप्रमाणात् अभिक्रमणं प्रयाजस्य अङ्गं भवति तथैव '**स वा एष एवं पश्यन्———**' इत्यस्मिन् यद्दर्शनं विहितं तदपि 'आत्मक्रीड' इत्यादिरूपसाध्य– भक्तेरङ्गमेवास्ति अश्नन्सुखीत्यादौ यथा अशनं तृप्तौ भवति तथैव दर्शनं भक्ताविति स्पष्टं भवति तस्मात् दर्शनं भक्तेरङ्गमेव अत्रापि साक्षात्काररूपदर्शनस्यैव स्वाराज्यफलं भवितुमर्हति इति केषाञ्चन शङ्कां सूत्रेणैव निराकुर्वन्ति '**दर्शनंफलमिति चेन्न तेनव्यवधानात्**'[192] इति। अर्थात् दर्शनमेवफलं न भवति तेन व्यवधानात् अर्थात् स स्वराङ् भवतीत्यत्रस्य 'स' इत्यनेन सन्निहिता आत्मरतिरेव गृह्यते। न तु विप्रकृष्टं पश्यन् इत्यादि। अतः अत्मरत्या साध्यभक्त्या एव स्वाराज्यं फलमिति स्पष्टम्।

भक्तिज्ञानयोः तुलनां कृत्वा नारायणतीर्थाः भक्तिविषयकं स्वसिद्धान्तं उपस्थापयन्ति साधनभक्तिः ज्ञानस्य अङ्गं ज्ञानञ्च साध्यभक्तेरङ्गम् इति। अमुं स्वसिद्धान्तं स्पष्टयितुं सप्तांशयुतं क्रमं दर्शयन्ति –

**भक्त्या मामभिजानाति यावन्यश्चास्मि तत्त्वतः।**

**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।**[193]

1) भगवदनुरागः 2) भगवत्स्फूर्तिः 3) भगवदनुग्रहः

4) स्वरूपज्ञानम् 5) प्रेमवृद्धिः 6) तन्निष्ठा 7) चरमप्रेम

एषु चतुर्थांशपर्यन्तं साधनभक्तिः ज्ञानस्य अङ्गम् अस्ति इति दर्शयित्वा पञ्चमांशादारभ्य ज्ञानं साध्यभक्तेः अङ्गमिति स्पष्टीकुर्वन्ति। अत्र प्रथमं तावत् साधनभक्तिः ज्ञानस्याङ्गं भवतीति प्रतिपादयितुं भगवद्वाक्यं स्पष्टीकुर्वन्ति –**'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः'** इत्यत्र भक्त्या नाम श्रवणमननादिरूपया साधनभक्त्या भगवन्तम् अभिजानाति। अर्थात् भगवतः माहात्म्यज्ञानगुणगरिमाञ्च श्रुत्वा भगवद्विषये ततोऽपि अधिकं श्रोतुं मनः भवति श्रुत्वाच प्रफुल्लितेन मनसा तद्विषये एव चिन्तनं भवति चिन्तनेन भगवन्तं तत्त्वतो ज्ञातुं साधकः यत्नशीलः भवति यत्नशीलः सः सर्वदा सर्वथा च भगवदभिमुखं भवितुमेव यतते एतदाभिमुख्यमेव अनुरागः इति नारायणतीर्थानां मतम्। मामभिजानाति इत्यस्मिन् माम्+अभिजानाति इति रूपं भवति, अस्मिन् अभ्युपसर्गपूर्वक ज्ञा धातोः अर्थः आभिमुख्यम् इत्यस्ति। अत्र आभिमुख्यमित्यनेनपदेन अनुरागः, जानातीतिपदेन स्फूर्तिः इत्येवम् अर्थं स्वीकरणीयम् इति तेषां मतम्। तमानन्दरूपं लीलाविग्रहोपहितं भगवन्तं अनुरागेण अनुभूय इत्येतावत्पर्यन्तं साधनभक्तिमुक्त्वा सा ज्ञानस्य अङ्गमिति स्पष्टीकृत्येदानीं ज्ञानं साध्यभक्तेरङ्गमिति भगवद्वचनात् स्पष्टीकुर्वन्ति **'ततो मां तत्त्वतः ज्ञात्वा विशते तदनन्तरमित्यनेन'।** ततः इत्येतस्मात्पदात् अनुरागेण भगवन्तमनुभूय, तत्त्वतः इत्यस्यार्थं वदन्ति अशेषविषयतः साक्षात्कृत्य, एतदेव शास्त्रेषु ज्ञानस्यफलरूपेण प्रसिद्धं प्रेम भवति यतः अत्र इतरविषयाणां भानं न भवति एतादृशा प्रेम्णा भगवदनुरागस्मरणमाहात्म्यात् सर्वकल्याणगुणपूर्णं भगवन्तं प्राप्नोति इत्यर्थः। एतच्च श्रुत्या प्रमाणीकुर्वन्ति **'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया'।**

एतस्माच्च इदमेव पर्यवसितम् –'**भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्**'[194] इति। अर्थात् साधनभक्त्या भगवन्तमनुभूय अर्थात् भगवज्ज्ञानं प्राप्य तेन ज्ञानेन अशेषविषयतः भगवन्तं साक्षातकृत्य अर्थात् तादृशं प्रेम अवाप्य भगवन्तं प्राप्नोति इत्येतत्स्मात् ज्ञानेन तत्फलरूपेण सकलशास्त्रप्रसिद्धं प्रेम अवाप्य, तेन प्रेम्णा भगवन्तं विशते इति।

**'अहमेव परं रूपं नान्ये जानन्ति केचन।**

**गोप्य एव हि जानन्ति मद्रूपं मत्क्रियादिकम्।।'**[195]

अस्माद्भगवद्वचनात् मोक्षकारणरूपेण भक्तिः स्वतन्त्ररूपेण स्वीक्रियते इति नारायणतीर्थाः दृढं प्रतिपादयामासुः।

**वेदानां पौरुषेयत्वविचारः**

भारतीयचिन्तनप्रवाहे वेदानां पौरुषेयत्वविषये महती चर्चा कृता दृश्यते। तत्र केचन वेदानांपौरुषेयत्वं केचन अपौरुषेयत्वं मन्यन्ते। अद्वैतवेदान्तिनः वेदाः पौरुषेयाः इत्येव मन्यन्ते। शाण्डिल्यमहर्षिणाऽपि वेदानां पौरुषेयत्वम् अङ्गीकृत्य '**निर्मायोच्चावचं श्रुतीश्च निर्मिमीते, पितृवत्**'[196] इत्यनेन सूत्रेण ब्रह्मणः वेदकर्तृकत्त्वमेव दर्शितम्।

परन्तु केचन वेदानामपौरुषेयत्त्वं मन्यन्ते अत एव तेषां मतमत्रोपस्थाप्य नारायणतीर्थैः विषयोऽयं विशदीकृतः। पूर्वपक्षिणां मतमनुसृत्य यदि वेदानां निर्माणं परमेश्वरेण कृतमिति वदन्ति तर्हि वेदाः पौरुषेयाः इति वक्तव्यम् (भवेत्)। कार्यस्य तस्योपादानकारणस्च च एकशक्तिमत्त्वं न दृश्यते, घटे सामर्थ्यं वर्तते तदेवः मृतिकायां न सम्भवति। एवमेव ब्रह्मणः कार्येषु विद्यमानं सामर्थ्यं ब्रह्मणि विद्यमानं सामर्थ्यम् इत्यनयोः व्यभिचारो

दृश्यते। वेदानां यदि सर्वार्थ प्रकाशनसामर्थ्यं मतं तर्हि तदेव ब्रह्मण्यपि भवति इति न साधुः। यदि एवं मन्यते तर्हि यथा वेदाः स्वयमज्ञाः किन्तु जीवानां सर्वार्थप्रकाशकाः तथैव ब्रह्म अपि अज्ञः प्रकाशकश्च इति मन्तव्यम्। एवमपि ब्रह्मणः नदीवालुकासङ्ख्यप्रकाश जनकत्वं न भवति सः वेदान् एव प्रकाशयति। एवं वेदाः पौरुषेयाः मन्यन्ते चेत् ब्रह्मणः अज्ञत्वम् आपद्यते इति इयं पूर्वक्षिणाम् आशङ्का भवति।[197] एताम् आशङ्कां समादधानाः नारायणतीर्थाः ब्रह्मणः वेदकर्तृत्वविषयं प्रस्तुवन्ति। ब्रह्मणः वेदकर्तृत्त्वं स्पष्टीकर्तुम् अंशत्रयांश्च उपस्थापयन्ति।

1) अर्थमुपलभ्य रचयितृत्त्वम् कर्तुत्वम्, 2) उच्चारयितृत्त्वम् कर्तृत्वम्

3) पूर्वक्रमस्य अनपेक्षया स्वतन्त्रक्रमेण उच्चारयितृत्त्वात् कर्तृत्वम् इति।

नारायणतीर्थाः वदन्ति यदि अर्थमुपलभ्य रचयितृत्वात् ब्रह्मणः वेदकर्तृत्त्वम्ङ्गीक्रियते तर्हि ब्रह्मणः सापेक्षत्वलक्षणं पौरुषेयत्वमापद्येत। अर्थात् किमपि दृष्ट्वा वेदानां रचना जाता इत्यर्थ उपपद्येत तस्माच्च सापेक्षलक्षणं पौरुषेयत्त्वम् आपद्येत, यदि उच्चारयितृत्वात् ब्रह्मणः वेदकर्तृत्वम् इति अङ्गीक्रियते तर्हि तत्र अंशद्वयमुपतिष्ठते–

1) कस्यचिच्छ्रुत्वा शब्दं यदि शुकः अनुवदति, तदा तस्मिन्प्रसङ्गे शुकस्य कर्तृत्वमापद्येत,

2) शिष्यः गुरूवाक्यं श्रुत्वा वदति चेत् शिष्यस्य कर्तृत्वमापद्येत अथवा मौनं पालयतः कस्यचित् रचनां यः कोऽपि प्रथममुच्चरेत् स एव तस्य कर्ता भवेत्।

एवं यदि उच्चारणमात्रादेव कर्तृत्वमितिवक्तव्यं तर्हि ब्रह्मणः अध्यापकत्वमेव सिध्यति न तु कर्तृत्वविशेषः अपि च एकस्य

वेदस्योच्चारणेन अध्यापकत्त्वं सिध्यति चेत् सर्वेषां वेदानामुच्चारणेन महोपाध्यायत्त्वमेव भवेत्।

यदि पूर्वक्रमानपेक्षया स्वतन्त्रक्रमेणोच्चारयितृत्त्वात् ब्रह्मणः कर्तृत्त्वं चिन्त्यते तर्हि पूर्वकल्पे यथा वा येन क्रमेण वा स्वराणां रचना कृता तेनैव क्रमेण अस्मिन्नपि सृष्टौ उच्चारणेन कर्तृत्वं न भवति। भिन्नक्रमेण उच्चारितत्त्वे सति वाग्वज्रत्वेन दुरितप्रसङ्गो भवति।

एवं ब्रह्मणः वेदकर्तृत्वविषये ये त्रयांशाः दृष्टाः तैः अंशैः ब्रह्मणः सापेक्षलक्षणपौरुषेयत्त्वम्, अध्यापकलक्षणत्त्वं दुरितप्रसङ्गश्चोत्पद्येत इति स्पष्टीकृत्येदानीम् स्वमतं विशदीकुर्वन्ति –

परमेश्वरः अध्येतॄणां पुरुषार्थसिध्यर्थं पूर्वकल्पे विद्यमानांवेदनामक ज्ञानराशिम् अस्मिन् कल्पारम्भे तेनैव क्रमेण ददाति।[198] स्वमतमेतं प्रमाणयितुं '**धाता यथापूर्वमकल्पयत्**'[199] इत्येतां स्मृतिमुद्धृत्य ब्रह्मणः अध्यापकविलक्षणं वेदकर्तृत्वं सिद्धीकुर्वन्ति नारायणतीर्थाः। अध्यापकविलक्षणं वेदकर्तृत्वं नाम अन्यक्रमस्य अपेक्षाम् अकृत्वा स्वकृतेनैव क्रमेण विशिष्ट वैदिकवर्णानां कर्तृत्त्वम्/उच्चारयितृत्त्वम् अतीतेषु अनन्तेषु कल्पेषु ब्रह्मणैव वैदिककर्मस्वरादीनाम् उत्पत्तिः कृता अनेकवैदिकवर्णपदवाक्यानामपि निर्मितिः कृता इति उक्त्वैव ब्रह्मणः कर्तृत्वं सिद्ध्यति अन्यथा ब्रह्मणः अकर्तृत्वमापतेत्। तेषां मते कल्पान्तरेषु प्रचलितं वेदोत्पत्तिरूपं कार्यं ब्रह्मणः एव भवतीत्यस्मिन् शङ्कालेशोऽपि न वर्तते।

प्रमाणानि अन्तःकरणवृत्तयः सन्ति, तासां ब्रह्मणि सर्वथाभावात् प्रमाणानां विषयो नोपपद्यते। अनावृतेन चैतन्येन ब्रह्मणा यद्यद् सृष्टं तत्तत् सर्वमेव स प्रकाशयतीत्यनेन च सर्वदा सर्वत्र सर्वञ्च यः जानाति स सर्वज्ञः

परमेश्वरः वेदानां कर्तास्ति, तस्मादेव निर्मितत्त्वाद् वेदाः पौरषेयाः भवन्तीति नारायणतीर्थाः सिद्धीकुर्वन्ति।

**नारायणतीर्थानाम् अद्वैतमतादरः**

नारायणतीर्थाः स्वकीयकालस्य महान्तः परिव्राजकाचार्याः आसन्। वाचस्पतिमिश्रवत् तेऽपि सर्वतन्त्रस्वतन्त्रबिरुदाञ्चिताः आसेतुहिमाचलं वैदिकधर्मस्य प्राचीनशास्त्राणाञ्च माहात्म्यं प्रसारयन्तः प्रथितयशसः अभूवन्। वेदान्ताचार्याः नारायणतीर्थाः विशिष्य अद्वैतवेदान्ते महतीं निष्ठां वहन्ति स्म अत एव तेषां दर्शनव्याख्यानसाहित्ये सर्वत्र अद्वैतप्रवणता दृष्टिगोचरीभवति योगव्याख्यानं स्यात् भक्तिशास्त्रव्याख्यानं वा स्यात् तत्र तेषाम् अद्वैतमतादरः अवश्यं प्रतिस्फुरितो भवति।

शाण्डिल्यभक्तिसूत्राणां व्याख्याने पदे पदे तेषाम् अद्वैतप्रियत्वं राराष्टि। भक्तिसिद्धान्तानां समन्वये अद्वैतस्यापि विरोधो न भवति तद्दिश्या जिज्ञासुभिः प्रयत्नः करणीयः इति महत्या भावनया नारायणतीर्थाः अद्वैतसिद्धान्तानुसारं भक्तिसिद्धान्तानां समन्वयं कुर्वन्ति। अतः भक्तौ केवलं द्वैतमेव इति वदतां मतं नारायणतीर्थमते न युक्तम्। द्वैताद्वैतयोः परस्परसमन्वयेन कथं वा शास्त्रमर्यादा परिरक्षिता भवेत्, निःश्रेयसात् प्रच्युतिरपि न भवेत् तादृश्यारीत्या शास्त्रसमन्वयः वेदान्तरीत्या कृत इति भक्तिचन्द्रिकायाः परमं वैलक्षण्यं। तत्र नारायणतीर्थास्तावद् '**सा परानुरक्तिरीश्वरे**'[200]इत्यस्य सूत्रस्य व्याख्याने भक्तेः रसरूपत्वं प्रतिपादयद्भिः नारायणतीर्थैः प्रेम्णः पराकाष्ठैव भक्तिः पुरुषार्थरूपेति सैव च द्रवावस्था प्रणयानुरागस्नेहशब्दैरपि सङ्कीर्त्यत इति च विवृतम्।[201] अत्र '**विसृजति हृदयं न यस्य साक्षात्**'[202] इत्यस्मिन् श्लोके 'प्रणयरशनया' इत्यस्य शब्दस्य व्याख्याने प्रणयो द्रवावस्था सैव रशना

रज्जुवद् बन्धनसाधनं, तस्यां प्रविष्टस्य पुनर्निगमाभावात् इत्यमुमर्थं कथयित्वा अयमर्थः भगवत्पासदीय स्वीकृतः इति ते स्पष्टयन्ति। पुनश्च सन्दर्भेऽस्मिन् भक्तावपि अद्वैतस्य समन्वयं ततदाशङ्का–निरसनपुरस्सरं कुर्वन्ति। नारायणतीर्थानां मतानुसारं स्नेहविशेषरूपायां भक्तौ अद्वैतज्ञानं प्रतिबन्धकं न भवति अपि च भगवन्माहात्म्यं नाम तस्य गुणगरिमा। गुणाश्च सत्यज्ञानानन्दा एव स्वरूपात्मका। अतः अद्वैतज्ञानं माहात्म्यज्ञानद्वारा अखण्डार्थे कारणम् इत्यतः भक्तौ तद् प्रतिबन्धकं न भवति। सत्यसङ्कल्पादयस्तु गुणाः सात्विकप्रकृतिमूलातया व्यावहारिकाः तथापि उपाधिवशात् जीवात् भिन्नः इव भासमाने ईश्वरे अभिमताः अतस्तत्रापि माहात्म्यस्य बाधो न सम्भवति। एवञ्च अद्वैतेऽपि ईश्वरप्रीतिः प्रपञ्चजातमेव विस्मारयति इति अद्वैते भक्तिः भक्तावप्यद्वैतं सम्भवत्येव इति तेषां मतम्।

पुनश्च अद्वैते प्रेमभक्तिसम्भवेऽपि सेव्यसेवकभावरूपा भक्तिः कथं वा सम्भवेदिति प्रश्ने नारायणतीर्थानां मते **'जन्माद्यस्य यतः'**[203] इति न्यायेन कारणत्वाक्रान्तस्य ब्रह्मणः सेव्यत्वमुपपद्यते इति शुद्धाद्वैतेऽपि सेव्यसेवकभावरूपाभक्तिः सम्भवतीति नारायणतीर्थाःविवृण्वन्ति। पुनश्च वेदान्तानुसारं सर्वमिथ्यात्वं जानताम् ईश्वरे कथं वा भक्तिस्सम्भवेदित्याशङ्का भवेद् तत्र नारायणतीर्थानां मते साधनदशाभ्यासजन्यसंस्कारवशात् अद्वैतिनः भक्तौ सर्वलौकिक–व्यवहारवद्प्रपञ्चबाधस्यापि विस्मरणं भवतीति विचारः। भक्तिरसः परमानन्दरूपः अतः स्वं विहाय अन्यान्सर्वान् अभिभवतीति भक्तावपि सर्वमिथ्यात्वज्ञानेन सह कोऽपि विरोधो नास्ति। तर्हि भक्तिसुखकारणात् अद्वैते आवश्यकं वैराग्यं न भवेदिति शङ्का भवति अत्रापि ये भक्तिसुखे अनासक्ताः तान्प्रति एव वैराग्यमावश्यकम्। अतः

भक्तिसुखाद्वैराग्यं न भवतीति मिथ्यावचः तत् इष्टमेव। जीवन्मुक्तानामपि भगवद्भक्तिप्रतिपदनं श्रुतिस्मृतिषु कृतमिति विभावनीयम्।

ब्रह्मणः नीरूपत्वेन सौन्दर्याभावात् ततश्च माहात्म्यज्ञानबाधात् भक्तिर्नसम्भवतीति शङ्का भवेत् परन्तु नारायणतीर्थानां मते ब्रह्मणः प्राकृतरूपशून्यत्वेऽपि सत्यज्ञानानन्दादि अप्रकृतरूपवत्वात् नीरूपे ब्रह्मण्यपि सौन्दर्यज्ञानाद्भक्तिर्भवत्येव इत्येवं रीत्या भक्तावायद्वैत समन्वयं नारायणतीर्थाः साधितवन्तः।[204] तथैव अज्ञाननाशादनन्तरमेव मुक्तिर्भवतीत्युक्ते तस्य जन्यत्वं न सम्भवतीति कथं प्रेमोपालक्षितानन्दस्य पुरुषार्थता इति प्रश्नस्य समाधानं कुर्वद्भिराचार्यैः कथितं यत् वेदान्तनये अज्ञाननिवृत्तेः निवृत्त्युपलक्षितस्यैव पुरुषार्थतत्वात् अर्थात् प्रेमोपलक्षितानन्दस्यैव पुरुषार्थत्वं तथैव मोक्षे प्रेमसद्भावे बाधकाभावः एतावता अद्वैतभङ्गोऽपि न भवति यतः द्वयोरपि विषमसत्ताकत्वम् अङ्गीकरणीयम् अन्यथा व्यवहारकाले घटादिनापि अद्वैतभङ्गः आपद्येत।

'**न च क्लिष्टः परः स्यादनन्तरं विशेषात्**'[205] इत्यस्य सूत्रस्य व्याख्यानेऽपि नारायणतीर्थैः रामानुजमतसमीक्षणपूर्वकम् अद्वैतपक्षस्य साधुत्वं दर्शितम्। तत्र '**वैषम्यादसिद्धम्**'[206]इत्यादिना सूत्रेण भेदाभेदयोः विरोधेन उभयपदार्थमश्रुतीनां प्रामाण्यं कथं स्यादित्याशङ्कायां सोऽहं देवदत्तः इति प्रत्यभिज्ञायामिव विशिष्टयोर्भेदेऽपि केवलयोरभेदश्शक्येति नारायणतीर्थाः व्यवृण्वन्। तथा जीवानां बहुत्वं भोक्तृत्वम् ईश्वरस्य एकत्वं प्रयोजकत्वञ्चावलम्ब्य श्रीमद्रामानुजाचार्यैः इदमेवसूत्रद्वयम् अन्यथा व्याख्यातं तेषां मते भिन्नयोरभेदस्य अभिन्नयोश्च भेदस्य बाधा।

एवञ्च तत्त्वज्ञानोत्तरं जीवस्य लिङ्गशरीरभङ्गो भवति स एव अविभागः। अतः तस्यामवस्थायां न क्लेशगन्धोऽपि। एवञ्च 'सदेव सौम्य इदमग्र आसीत्' इत्युपक्रम्य 'एकमेवाद्वितीयम्' इत्यादिना भेदराहित्यं बोधयन्त्या श्रुत्या अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति कथयन्त्या तत्त्वमसीति शुद्धाभेदः कथितः। इत्येतद् विवृण्वन्तो रामानुजीयाः भेदनिन्दनात् भेदश्रुतितः अभेदश्रुतिरेव बलवती भेदवाक्यानि आरोपितभेद–अनुवाद पराणि इत्येतस्य तात्पर्यम् अन्यथोक्तम्। विशिष्टं शुद्धात् नातिरिच्यते इति नियमानुसारं विशिष्टं शुद्धमभिन्नं चेत् जीवत्व–ईश्वरत्व –ब्रह्ममोक्षादिसङ्करो भवेत्। विशिष्टं शुद्धादिभन्नमिति चेत् विशिष्टस्यमिथ्यात्वेन विनाशित्वात् बन्धमोक्षान्युपपत्तिः इत्येवं विमृश्य रामानुजीयाः भेद श्रुतीनां स्वरूपतो भेद एवार्थः भेदनिन्दावाक्यानि तु वैधर्म्यरूपभेदस्य अविभागनामकस्य निन्दकानि। एवञ्च अभेदश्रुतीनां गौणः अभेद एव अर्थः इति रामानुजीयमतमिति तन्मतमुपस्थाप्य नारायणतीर्थाः तत्र शुद्धाभेदस्य अद्वैतसम्मतस्य समर्थनं कुर्वन्ति।[207] तेषां मते 'तत्त्वमेव त्वमेव तत्' इत्यत्र एवकारः कैवल्यं बोधयति तच्च शुद्धाभेदरूपम् अन्यत्र च 'विज्ञातारमरे केन विजानीयात्' इत्युपसंहारेणाद्वैतज्ञानमेव मोक्षजनकमिति प्रतिपादितम्। अतः भेदस्सर्वोपि आविद्यकः[208] अतः अज्ञानोपाधिवशाद्भेदः मिथ्येति नारायणतीर्थाः अद्वैतसमन्वयं कुर्वन्ति। लवणोदकादिदृष्टान्ताः अपि शुद्धाद्वैतपरकत्वेन मन्तव्या इति तेषां मतम् अतः भेदनिन्दावाक्यान्यपि वैधर्म्यरूपमविभागनामकं भेदमेव निन्दान्तीति मतमपि न समीचिनमिति नारायणतीर्थाः व्याख्यान्ति। एवञ्च विशिष्टस्य विषये यः विचारः प्रस्तुतः तत्रापि नारायणतीर्थाः स्वमतमेवमुपस्थापयन्ति–विशिष्टं शुद्धादिभन्नमित्युक्तेऽपि

नित्यमुक्तस्यात्मनः सदाशुद्धत्वमेव उपाध्यवच्छेद्यत्वन्तु स्वाभासदशात्। अतः न कोऽपि दोषः। एवञ्च शुद्धे केवलमारोपितानां विशेषाणां तत्त्वज्ञानेन निराकरणात् शुद्धमेवावशिष्यते तदेवचैतन्यं ब्रह्मेति कारणेन 'न च क्लिष्टः' इत्यत्र प्रतिपादितम् अद्वैतपक्षीयमेवव्याख्यानं साधीयः इति नारायणतीर्थानां निष्कर्षः।[209]अत एव ईश्वगीताप्रमाणेन प्रपञ्चमिथ्यात्वं प्रमाणीकृत्य शुद्धस्याद्वितीयस्य ब्रह्मणः अनिर्वाच्य मायारूपस्योपाधिकारणेन सर्वव्यवहारः सम्भवतीति ते निष्चिक्युः।[210] पुनश्च सर्वमतेऽपि प्रपञ्चः अनित्यः इति कारणेन मुक्तस्य प्रपञ्चाभाव एव इति ते सुदृढं प्रत्यपादयन्।

**युक्तौ च सम्परायात्**[211]इत्यस्य सूत्रस्य व्याख्यानेऽपि प्रकृतिपुरुषयोः अनादित्वं कथयित्वा **शक्तित्वान्नानृतं चेत्यम्**[212] इति सूत्र व्याख्याने नारायणतीर्थाः अद्वैतसिद्धान्तानुसारं स्वमतं प्रतिष्ठापयामासुः। अद्वैतवेदान्ते जगन्मिश्येति प्रतिपादयितुं श्रुतिवदनुमानप्रमाणमपि दर्शितं यथा –

प्रकृति–तत्कार्यादिकं सर्वं मिथ्या

दृश्यत्वाद्

शुक्तिरजतादिवद्

अत्र मिथ्यात्वसाधकानुमाने स्वीकृतेषु बहुषु हेतुषु 'दृश्यत्वाद्' परिणामित्वात् कार्यत्वात् इत्यादिषु दृश्यत्वादित्यनुमानम् अवतरणिकायां दर्शयित्वा प्रकृतेरलीकत्वं न सम्भवतीति सूत्रस्वारस्यं कथयद्भिः नारायणतीर्थैः वह्नेर्दाहादिजननसामर्थ्यं यथा वह्निस्वरूपं तथा प्रधानं ब्रह्मनिष्ठसर्वकर्तुतासामर्थ्यमित्यतः तदैक्यकारणेन नाद्वैतभङ्गः न वा प्रकृति सत्यत इति अद्वैतमतानुसारं स्वमाशयं प्रकाशयामासुः।[213]अतः

ब्रह्मणि सर्वस्य विकारस्य अवस्थितिं वदतः **तत्प्रतिष्ठा गृहपीठवत्**[214]इत्यस्य भक्तिसूत्रस्यव्याख्याने ब्रह्मलक्षणं विवर्तोपादानं मायाश्रयः इत्येवोक्तमत्रापि नारायणतीर्थानाम् अद्वैतप्रियत्वं स्पष्टमेव। अतः 'ब्रह्मविवर्तोपादानम्'[215] इति कथयित्वा **'न विकारिणस्तु करणविकारात्'**[216] सूत्रव्याख्याने जीवस्य विवर्ताधिष्ठानत्वमुक्तम्। प्रपञ्चरूपः विवर्तः मायावशात् ब्रह्म उपादानीकृत्य जीवे भवतीति तदर्थः अन्ते तावत् जीवब्रह्मणोः अभेद एव, भेदस्तु काल्पनिकः इत्येव स्वमतं[217]**पृथगिति चेन्न परेणासम्बन्धात्प्रकाशानाम्**[218]इत्यस्मिन् सूत्रे नारायणतीर्थाः प्राचीकषन्। अन्यत्रापि नारायणतीर्थानाम् अद्वैतमतादरः सुस्पष्टः सुविज्ञेयश्च तथाहि **'संसृतिरेषामभक्तेः स्यात् न अज्ञानात्, 'करणत्वासिद्धेः'**[219] इत्यस्य सूत्रस्य व्याख्याने सूत्रार्थमद्वैतमतानुसारमेव नारायणतीर्थाः व्यातेनिरे। तत्र जीवानाम् अभक्तिवशात् संसारो भवति न तु अज्ञानात् अज्ञानस्य कारणत्वमसिद्धमिति सूत्रार्थः स्पष्टः। स च तथा स्वप्नेश्वरादिभिः स्वीकृतः, यद्येवं सूत्रार्थो गृह्येत तर्हि अद्वैतस्य भङ्गः अज्ञानस्य च संसारकारणत्वभङ्गः सिध्येत् अतः नारायणतीर्थाः तत्सूत्रे अदृष्टमपि पदद्वयं योजयित्वा तत्सूत्रार्थम् अद्वैतानुसारमेव व्याचख्युः। तथाहि एषां जीवानाम् अभक्तेरपि संसारः न अज्ञानमात्रात् इति वाक्यं कृत्वा केवलस्य अज्ञानस्य कारणत्वमसिद्धमिति ते व्यावृण्वन्।

अज्ञानात् कथं संसारो भवति अज्ञानात् न कुत्रापि अर्थसृष्टिर्दुष्टेति शङ्कायां नारायणतीर्थाः अद्वैतवेदान्तानुसारं स्पष्टीचक्रुः यद् वस्तुतः अभक्तेरपि अर्थसृष्टिर्न दृश्यते अज्ञानात्तु शुक्तिरजतादिसृष्टिः स्वप्नसृष्टिश्च भवतीति आदावुक्त्वा पुनश्च, शुक्तिरजतादिस्थले अन्यथाख्यातिर्नास्ति तत्र अनिर्वचनीयैव ख्यातिरिति अद्वैतं सिद्धान्तं समर्थयन्ति।[220]

एवमेव **'क्रमैकगत्युपपत्तेस्तु'**[221] इत्यस्य सूत्रस्यव्याख्याने परिपक्वानुरागाणां भगवदभेदरूपा भगवद्प्राप्तिः अपरिपक्वानुरागाणान्तु साधनभक्त्या तत्रल्लोकप्राप्तिरिति नारायणतीर्थैः विवृतं तत्र तत्त्वज्ञानद्वारैव भक्तेः मोक्षसाधनत्वं स्वीकृतं चेत् अविपक्वानामपि साधनभक्त्या कथं भगवल्लोकप्राप्तिः इति शङ्कां पुरस्कृत्य नारायणतीर्थैः समाहृतं यत् वेदान्तविचारे अधिकाराभावेऽपि तत्त्वज्ञानं प्रति साधनभक्तेः वेदान्तविचारस्य च वैकल्पिक हेतुत्वं वर्तत इति कारणेन वेदान्तविचारं विनापि साधनभक्त्यैव तत्त्वज्ञानद्वारा भगवल्लोकप्राप्तिर्भवति इति नारायणती भक्तेः विचारस्य च विकल्पं स्वीकुर्वन्ति।[222]

एवं बहुषु स्थलेषु महतादरेण नारायणतीर्थैः भक्तिसूत्रव्याख्यानेऽपि स्वकीयाद्वैतनिष्ठा शब्दद्वाराभिव्यक्ता। कुत्रापि भक्तेः सम्प्रदाये अद्वैतस्य विरोधो यथा न भवेत् तथा तैः सप्रमाणं प्रस्थापितम् एतेन तेषाम् अद्वैतानुरागः सुस्पष्टो भवति।

श्रुतिस्मृतिपुराणादिवाङ्मये अप्रतिहतां गतिं धारयन्तः नारायणतीर्थाः सांख्य–योग–न्याय–मीमांसादिशास्त्रेष्वपि प्रामाणिकं वैदुष्यं वहन्ति। तेषां वैदुष्यकारणेन भक्तिचन्द्रिकाव्याख्यानस्य महत्त्वं वर्धितं भूत्वा विविधानां शास्त्रविषयाणां समाकलने जिज्ञासूनां महानुपकारो भवति। अतस्तेषां शास्त्रवैदुष्यस्य समालोचनं पञ्चमाध्याये करिष्यते।

————

## संदर्भाः

1. शा.भ.सू. 1–1–2
2. नारायणभ.सू. 2
3. भ.च. पृ.4
4. भ.च. 4,5, 5 – योगसूत्र 1–23
6. तत्रैव 6
7. तत्रैव 7
8. तत्रैव 9
9. तत्रैव 10
10. तत्रैव 10,11
11. तत्रैव 11,12
12. तत्रैव 12,13
13. तत्रैव 13,14
14. तत्रैव 14,15
15. तत्रैव 15,16
16. तत्रैव 16
17. तत्रैव 17
18. तत्रैव 17,18
19. तत्रैव 18,19
20. तत्रैव 19,20
21. तत्रैव 20,21
22. तत्रैव 21,22
23. तत्रैव 21,22
24. तत्रैव 23

25. तत्रैव 25
26. तत्रैव 25,26
27. तत्रैव 26,27,28
28. तत्रैव 28,29,30
29. तत्रैव 30,31,32
30. तत्रैव 32,33
31. तत्रैव 33,34
32. तत्रैव 34,35
33. तत्रैव 35,36
34. तत्रैव 36,37
35. तत्रैव 37,38
36. तत्रैव 39,40
37. तत्रैव 40,41
38. तत्रैव 116,117
39. तत्रैव 03
40. तत्रैव 116,117,164
41. सूत्रम् –परांकृत्वैव सर्वेषां तथा ह्याह। 2–2–29 भ.च.पृ. 180,181
42. भ.गी.181,182
43. भ.गी. 11–20–6 भ.च. 182
44. तत्रैव 11–7–11 तत्रैव 182
45. भ.च. 182
46. तत्रैव 183
47. तत्रैव 183

48. तत्रैव 182

49. तत्रैव183

50. भ.च. 47 शा.भ.सू. 1—1—6

51. तत्रैव 48

52. नाट्यशास्त्रम् अध्याय: 6

53. भ.च. पृ. 50

54. तत्रैव 53

55. तत्रैव54

56. तत्रैव 53

57. तत्रैव 02

58. तत्रैव 06

59. तत्रैव 07

60. शा.भ.सू. 1—1—3

61. भ.च. पृ. 42

62. तत्रैव42

63. तत्रैव

64. तत्रैव

65. तैत्तिउप. शिक्षावल्ली चतुर्थ अनुवाक् 1

66. यो.सू. 1—23

67. शा.भ.सू. 1—1—4

68. ब्र.सू. 1—1—7

69. भ.च. पृ. 43,44

70. तत्रैव 43

71. तत्रैव 44

72. तत्रैव 44

73. शा.भ.सू. 1–1–5

74. भ.च. पृ. 44

75. तत्रैव 46

76. तत्रैव 47

77. न्यायसूत्रम् 1–1–22

78. शा.भ.सू. 1–2–9

79. बृहद्.उप. 2–4–5, 4–5–6

80. भ.च. पृ. 58

81. तत्रैव 44

82. गीताभाष्यम् पृ. 41, 42

83. शा.भ.सू. 1–1–5

84. भ.च. पृ. 44

85. तत्रैव44, 45

86. तत्रैव 45

87. तत्रैव

88. तत्रैव

89. तत्रैव 46

90. शा.भ.सू. 1–1–9

91. भ.गी. 7–19

92. भ.च.पृ. 57

93. तत्रैव 58

94. शा.भ.सू. 1–2–4

95. तत्रैव 1–2–6

96. भ.च.पृ.75

97. तत्रैव 76

98. तत्रैव 75

99. तत्रैव 76

100. तत्रैव

101. तत्रैव 78

102. तत्रैव 75

103. तत्रैव 76

104. तत्रैव 77

105. तत्रैव

106. तत्रैव 77,78

107. शा.भ.सू. 2—2—21

108. भ.गी. 4—36

109. श्रीभाग. 6—1—11

110. भ.गी. 9—34, 18—66

111. भ.च.पृ. 147,148

112. श्रीभाग. 21

113. शा.भ.सू. 2—2—23

114. भ.च.पृ. 149

115. तत्रैव 150

116. तत्रैव 152

117. तत्रैव 153

118. तत्रैव

119. तत्रैव 154

120. तत्रैव 154,155

121. भ.गी. 3—18

122. बृहद्.उप.2,4,14

123. ब्र.सू. 4—4—15

124. भ.गी. 6—20

125. शा.भ.सू. 3—2—4

126. भ.च. पृ. 202

127. शा.भ.सू. 2—1—7

128. तत्रैव3—1—7

129. शा.भ.सू. 3—2—1

130. भ.च. पृ. 146, 147, 149, 151—155

131. शा.भ.सू. 2—2—29

132. भ.च. पृ. 181, 182

133. तत्रैव 114

134. यो.सि.च. 37,38,39,40

135. ब्र.सू. 1—1—20

136. भ.च.पृ. 114

137. शा.भ.सू. 2—1—28

138. तत्रैव 2—1—29

139. तत्रैव 2—1—20

140. भ.च.पृ. 109

141. तत्रैव

142. तत्रैव

143. तत्रैव

144. तत्रैव 110

145. भ.गी. 12—5

146. भ.च.पृ. 110

147. तत्रैव 111

148. तत्रैव

149. तत्रैव

150. ब्र.सू. 2—1—33

151. मैत्रा.उप. 4—5

152. भ.च. पृ. 112

153. तत्रैव 112, 113

154. तत्रैव 113—115

155. भ.च.पृ. 113

156. तत्रैव

157. तत्रैव

158. श्रीभाग. 1—3—28

159. भ.गी. 10—41

160. भ.च.पृ.23,24,25,51

161. तत्रैव 23,24,25,61

162. तत्रैव 60

163. शा.भ.सू. 2—2—25

164. तत्रैव 2—2—26

165. भ.च.पृ.170

166. तत्रैव 171

167. शा.भ.सू. 2—1—3,4,5

168. भ.च.पृ. 82

169. तत्रैव 83

170. तत्रैव 2—1—7

171. भ.च.पृ. 87,88

172. तत्रैव 90,91

173. तत्रैव

174. शा.भ.सू. 2—1—11

175. भ.च.पृ. 93

176. शा.भ.सू. 2—1—13

177. तत्रैव 2—2—26

178. यो.सू. 4—7

179. भ.च.पृ. 174

180. माघकाव्यम् पृ.175

181. भ.च. पृ. 176

182. शा.भ.सू. 3—1—5

183. भ.च. पृ. 196

184. तत्रैव

185. भ.गी. 4—33

186. तत्रैव 18—5, भ.च.पृ. 196

187. भ.च. पृ. 197

188. तत्रैव

189. तत्रैव 62

190. शा.भ.सू. 1—2—1

191. तत्रैव1—2—2

192. शा.भ.सू. 1–2–3

193. भ.च. पृ. 63

194. तत्रैव 63

195. तत्रैव 62

196. शा.भ.सू. 3–1–5

197. भ.च. पृ. 195

198. तत्रैव

199. वे.प. आगमपरिच्छेदः पृ. 259

200.शा.भ.सू. 1–1–2

201. भ.च.पृ. 22

202. तत्रैव 22

203. शा.भ.सू. 1–1–2

204. भ.च.पृ. 23,24,25

205. शा.भ.सू. 2–1–7

206. तत्रैव2–1–6

207. भ.च.पृ. 88–89

208. तत्रैव 89

209. तत्रैव 90

210. तत्रैव

211. शा.भ.सू. 2–1–15

212. तत्रैव 2–1–16

213. भ.च.पृ. 94

214. शा.भ.सू. 2–1–12

215. भ.च.पृ. 93

216. शा.भ.सू. 3—2—3

217. भ.च.पृ. 203

218. शा.भ.सू. 3—2—2

219. तत्रैव 3—2—6

220. भ.च.पृ. 205

221. शा.भ.सू. 2—2—25

222. भ.च.पृ. 167—169

————

पञ्चमाध्यायः

# नारायणतीर्थानां शास्त्रवैदुष्यम्

नारायणतीर्थाः तस्मिन् काले स्वकीयाभिः शास्त्रकृतिभिः संपूर्णे पण्डितमण्डले प्रथितयशसोऽभवन्। विभिन्नेषु शास्त्रेषु अकुण्ठिता प्रज्ञा, सममेव सर्वेषु तेषु अप्रतिहता गतिः, शास्त्रार्थमर्मबोधे तीक्ष्णामतिः, शास्त्रसमन्वये च अचला निष्ठा इत्येतत् सर्वं तेषां कृतिषु स्फुटमवलोक्यते। सर्वशास्त्रपारीणत्वेन तेषां शिष्यत्वमवाप्तुं अनेके अहमहमिकया तेषामन्तिकमागत्य निवसन्ति स्म। षड्दर्शनपारमीयुषामेतेषां तीर्थचरणानां तलस्पर्शि वैदुष्यं संपूर्णे तेषां वाङ्मये परिस्फुरति। तत्पूर्वकाले वाचस्पतिमिश्राणां मधुसूदनसरस्वतीनाञ्च विषये शास्त्रजगति यादृशं स्थिरं यशः प्रसृतमासीत् तादृशमेव नारायणतीर्थानामपि विषये आभारतं प्रसृतमासीदित्यत्र न काऽपि अतिशयोक्तिः।

अत एव 'प्रायः सर्वदर्शनग्रन्थकाराणामेतेषां पाण्डित्यं श्रीवाचस्पतिमिश्र–वल्लोकातिशायीति कथने न मिथ्योक्ति वादस्य भीतिः'[1] इति वदतां श्रीमदनन्तशास्त्री फडके महोदयानां वचनं सर्वथा सार्थक्यं भजति।

न केवलं संस्कृतव्याकरणेऽपि च श्रुति–स्मृति–इतिहास–पुराण–न्याय–मीमांसा–सांख्य–योग–भक्ति–तन्त्रादिषु विविध शास्त्रेषु नारायणतीर्थानां निरुपमवैदुष्यकारणेन तेषां कृतयः संपूर्णभारते विलक्षणमेव आदरमवापुरिति वक्तुं शक्यते। स्वकीयस्य शास्त्रवैदुष्यस्य बलेन श्री नारायणतीर्थाः अतिगभीरमपि शास्त्रविषयं सुगमया रीत्या अवबोधयन्ति शास्त्ररहस्यञ्च प्रकाशयन्तीति भक्तिचन्द्रिकाध्ययनतः ज्ञायते।

श्रुतिवैदुष्यम्

श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां षण्णां प्रमाणानां मिथो बलाबलविचारणे श्रुतिरेव सर्व बलवतीति मीमांसाशास्त्रसिद्धान्तः। श्रुतिमनाश्रित्य न किञ्चिदपि प्रमाणं भवितुमर्हतीति तन्मतम्।

भक्तिसूत्रव्याख्यानप्रसङ्गे नारायणतीर्थाः सन्दर्भानुसारं श्रुति वाक्यान्युद्धृत्य भक्तेर्मीमांसां प्रमाणयामासुः। क्वचित् श्रुतिवाक्यानामाधारेणैव यदि कैश्चिद् भक्तिस्वरूपं शास्त्रविरुद्धरीत्या प्रतिपादितञ्चेत् तादृशश्रुतिवाक्याधारेणैव तस्य खण्डनं कृत्वा शास्त्रतत्त्वं प्रतिपादितमाचार्यैः। एवं सर्वदा श्रुतिहृदयमनुसरद्भिराचार्यैः शास्त्रसम्प्रदायः सम्यगाविष्क्रियत इति भक्तिचन्द्रिकाव्याख्यान–तोऽवगम्यते। यथा –

अवतारविशेषाणां विवरणसमये कैश्चित् कथितं यत् – अवतारा एते न परमेश्वरस्य लीलावताराः यतः मैत्रायणी श्रुतौ "एतास्तनवोऽग्निवायुरादित्यः कालोऽयं प्राणोऽन्नं ब्रह्मादिविष्णु रुद्र इत्येके अन्यमभिध्यायन्ति एके अन्यम्" इति ब्रह्मणो मायिकदेहोऽपि निराकृतः। तेन लीलावताराः अपि निराकृताः यतः कालीपुराणादौ नृसिंहवराहशरभाणां परस्परोपमद्यत्वं ब्रह्मविष्णुरुद्राणां मोह–पारवश्यं च श्रूयते। तस्मात् एते जीवविशेषा एव उपासनार्थमेव अवतारा इत्युच्यन्त इति, नारायणतीर्थानां मते तावत् मतमिदं न योग्यम्।

मैत्रायणीयश्रुतेरर्थमनवगम्यैव तैस्तथा व्याख्यामिति नारायणतीर्थाः सप्रमाणं व्यवस्थापयन्ति। परमेश्वरस्य अशरीरत्वस्यार्थः तदीया अवतारा अपि न भवन्तीति न परन्तु, स्वादृष्टारबभोगार्ह शरीरं न भवतीति ज्ञेयम्। यतः परमेश्वरः विचित्रानेकशक्तिमान् अत एव '**लोकवत्तु लीलाकैवल्यम्**'[2]

इति ब्रह्मसूत्रोक्तदिशा तस्य अवतारा भवितुमर्हन्ति। तेषां श्रौतावताराः पौराणावतारा इति द्वैविध्यमपि न शास्त्रसमतमिति नारायणतीर्थाः समुपवर्णयन्ति। अतः सर्वेऽप्यवताराः परमेश्वरस्यैव लीलावतारा इति शास्त्रनिष्कर्षो नारायणतीर्थैः प्रदर्शितः। एतत्सन्दर्भे पूर्वपक्षीयैः प्रदर्शितायाः मैत्रायणीयश्रुतैः वास्तवार्थः कथितः तथैव तस्या एव श्रुतेर्वाक्यान्तरात् अवताराः सर्वे लीलावतारा एवेति सिद्धान्तितम्। **"अथ यो ह खलु वाऽस्य तामसोंशो"** भवतीत्यादिना मैत्रायणीय श्रुतेः[3] वाक्यत एव त्रिगुणमायाविशिष्टः ईश्वरः प्रतिपादितः।

अवतारविषये नारायणतीर्थानां दृढं मतं तेषां व्याख्यान्तरादपि ज्ञातुं शक्यते। योगसिद्धान्तचन्द्रिका नामक–योगव्याख्यानस्य अध्ययनेन विषयोऽयं व्यवस्थापयितुं शक्यते। तत्रापि – 'ईश्वरप्रणिधानाद्वा' इत्यादियोगसूत्राणां व्याख्यानसन्दर्भे नारायणतीर्थाः अवतार स्वरूपं महत्त्वं च प्रतिपादयन्ति। तत्रापि अवताराणां लीलावतारत्वमेव स्वीकृतमाचार्यैः।[4]

भक्तिसम्प्रदाये अवतारस्वरूपवर्णनसमये नारायणतीर्थाः शास्त्राधारेण व्यवस्थामेकां प्रदर्शयन्ति –

1. सच्चिदानन्दघनः, अद्वितीयः, निर्विशेषसर्वकारणत्वादिउपलक्षितः परमात्मा भगवान्।

2. स एव परब्रह्मादिपदवाच्यः।

3. स एव त्रिगुणमायाविशिष्टः ईश्वरो भवति।

4. रामकृष्णादयोऽपि तस्यैव अवताराः।

एवमवतारविवेचनसमये आचार्यैर्बहुधा श्रुतिबलेनैव सिद्धान्तः प्रतिपादित इति तद्वयाख्यानतोऽवगम्यते।

**उपनिषज्ज्ञानम्**

नारायणतीर्थानामुपनिषज्ज्ञानं सुतरां गम्भीरं वर्तते। योग्ये प्रसङ्गे तैरुपनिषद्वाक्यानि न केवलं प्रमाणत्वेन स्वीकृतानि अपि तु तेषां वाक्यानां तात्पर्यमपि सुविविच्य प्रस्तुतम्। श्रुतिप्रमाणरूपेण संहितादिगतानां मन्त्राणामिव उपनिषदामपि मन्त्राणामुल्लेखो बहुधा तैः कृतः।

अद्वैतेऽपि भक्तिः कथं संभवेदिति चर्चाप्रसङ्गे भक्तौ प्रधानतया दृश्यमानः सेव्यसेवकभावः अद्वैतेऽपि संभवति इति प्रतिपादयद्भिः नारायणतीर्थैः**जन्माद्यस्य यतः**[5] इति न्यायेन कारणत्वाक्रान्तस्य ब्रह्मणः सेव्यत्वोपपत्तेः सेव्यसेवकभावे न कोऽपि विरोध इति स्पष्टीकृतम्। तत्र पुनः शङ्का प्रस्तुता यत् – 'सर्वं कर्म' इत्यादि श्रुतेः ब्रह्मणः कारणरूपं तात्त्विकमेवज्ञायतेऽतः अद्वैतस्वीकृतं निर्गुणं ब्रह्म न संभवतीति। तत्र नारायणतीर्थैरिदं स्पष्टीकृतं यत् श्रुतयस्तावत् निर्विशेषवस्तुमात्रं प्रतिपादयन्ति तदेव तात्पर्यलिङ्गेनानुगृहीतम्। तत्र प्रमाणमुपनिषदः इति उपनिषद्वाक्यानि प्रमाणतया दर्शितानि यथा–

1. द्वे वाव ब्रह्मणो रूपे मूर्तञ्च अमूर्तञ्च (इति उपक्रमः)

2. तस्य ह वा एतस्य पुरुषस्वरूपं यथा महारजनं वासः (इति अभिधानं)

3. अथात आदेशोनेति नेति न ह्येतस्मादिति न ह्यन्यत् (उपसंहारः)

एवञ्च वाक्यैरेतैः सत्यज्ञानानन्तादिपदबोधितं ब्रह्मैव बोध्यत इति नारायणतीर्थाः व्याचक्रुः।[6]

**ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः।**[7] सूत्रव्याख्यानेऽपि ब्रह्मसंस्थोऽमृतत्वमेतीति छान्दोग्योपनिषद्वाक्य तात्पर्यनिर्धारणे नारायणतीर्थैः संस्थाशब्दस्य भक्तिरेवार्थः इति निर्णयो दर्शितः। पुनश्च 'त्रयो धर्मस्कन्धा' इति छान्दोग्यवाक्यमेवाश्रित्य पूर्वपक्षिणा ब्रह्मसंस्थशब्दस्य परिव्राडित्यर्थो यो दर्शितः तत्र ब्रह्मसंस्थ इति यौगिकं सर्वविषयं न परिव्राण्मात्रमिति ते संजगृहुः।

**तयोपक्षयाच्च**[8] सूत्रव्याख्यानेऽपि तरति शोकमात्मवित्, **तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय**[9] इत्येतद् औपनिषद वाक्यमाधृत्य कृते विचारे 'मृत्युमतिक्रान्ता' इति व्युत्पत्तिं दर्शयित्वा नारायणतीर्थैः भक्तिरेव समर्थिता। भक्ती रस एवेति समर्थयितुं च तैः रसं ह्येवायं लब्ध्वाऽनन्दी भवतीति तैत्तिरीयवाक्यं समुद्धृतम्।

**सा मुख्येतराऽपेक्षितत्वादित्यस्य**[10] सूत्रस्य व्याख्यानेऽपि नारायणतीर्थैः छान्दोग्यवाक्यमुद्धृत्यैव भक्तेः परत्वमुपस्थापितम्। छान्दोग्ये तावत् यो वै भूमा तत् सुखम् इत्युपक्रम्य आत्मैवेदं सर्वमिति आम्नातम्। तत्र भक्तेरेव मुख्यत्वमुक्तमिति तैस्तस्य वाक्यस्यार्थः कथितः। व्याख्यानान्तरे वैलक्षण्यमिदं नदृश्यते।

तथैव**एतेनविकल्पोऽपिप्रयुक्तः।**[11] सूत्रस्य व्याख्यानेऽपि औपनिषदवाक्याधारेणैव चर्चा प्रवर्तिता। ज्ञानभक्त्योः कथं वा अङ्गाङ्गिभावोभवेदिति शङ्का तत्र प्रस्तुता। द्वयोरप्यनयोर्भिन्नाधिकारिकत्वात् स संबन्धो न संभवतीति तदर्थः। शान्तो दान्त उपरतस्तितिक्षुरिति वाक्येन शमाद्युपेत एव ज्ञाने अधिकारी

भवति भक्तौ तु सकलोऽपि जनो न निर्विण्णश्चेदपि भवत्यधिकारी। अतः द्वयोरङ्गाङ्गिभावो न भवतीति तदाशयः। पुनश्च '**येनाहं नामृता स्यां किमहं तेन कुर्याम्**' इति बृहदारण्यकवचसा ज्ञानस्य मोक्षसाधनत्वं '**यो यो ध्यायति सोऽमृतत्वमेति**' इत्यनेन च भक्तेर्मोक्षसाधनत्वं कथितं तेन च ज्ञानभक्त्योः विकल्पेन मोक्षसाधनत्वं भक्तिशास्त्रकारैः सिद्धान्तितमिति केषाञ्चन मतं पुरस्कृत्य पुनः तादृशविकल्पस्य अष्टविधदोषवत्त्वं कथयित्वा भक्तिसम्प्रदाये द्वयोरपि अङ्गाङ्गिभाव एवेति निरूपितमाचार्यैः।

**प्रश्ननिरूपणाभ्याम् आधिक्यसिद्धेरित्यस्य**[12] सूत्रस्य व्याख्याने नारायणतीर्थैः यो विशेषो दर्शितः स नितरां चेताहारी। प्रश्ननिरूपणाभ्याम् भक्तेरेव आधिक्यमिति सूत्रार्थं व्याख्यायता भक्तिचन्द्रिकाकारेण भक्तेराधिक्यं प्रश्ननिरूपणाभ्यां कथमिति उपनिषद्वाक्याधारेणैव प्रत्यपादि। तत्र '**श्रुतं ह्येव मे भावदृशेभ्यः तरति शोकमात्मवित्**' इति प्रश्नः, '**स वा एष एवं पश्यन्नेवं मन्वान एवं विजानत् आत्मरत आत्ममिथुनं**' इति च निरूपण मिति श्रुतिप्रमाणमाचार्यैः प्रदर्शितम्। स्वप्नेश्वरव्याख्याने तावत् भगवद्गीतातः प्रश्ननिरूपणे प्रदर्शिते। एवञ्च यत्र साक्षादेव श्रुति वाक्यं नोपलभ्यते तत्र स्मृतिवाक्यं प्रमाणीक्रियते चेत् न कोऽपि दोषः। परन्तु श्रुतिवाक्ये सति स्मृतिवाक्याधारेण सिद्धान्तसमर्थनं न तावदौचित्यं भजतीति नारायणतीर्थानां मतं दृश्यते।[13]

'**तमेव विदित्वाऽतिमृत्युमेति**' इत्युपनिषद्वाक्यविचारणे च केचन सगुणविषयमेव ज्ञानं मोक्षहेतुं मन्वानाः जीवेभ्यः स्वभावतो भिन्नस्य परमेश्वरस्य ऐश्वर्यम् अकाल्पनिकं सत् तत्त्वसाक्षात्कारविषयो

भवितुमर्हति तमेव विदित्वा—इति वाक्यगतः एवकारस्तु प्रक्रान्तविशिष्टातिरिक्तमेव व्यवच्छिनत्तीति कथयन्ति। तादृशं मतमपाकुर्वद्भिः नारायणतीर्थैः स एवकारः किमर्थक इति उपनिषत्प्रमाणेनैव निरूपितम्। अथात आदेशो नेति नेति, नेह नानास्ति किञ्चन—इत्याद्युपनिषद्वाक्यैः परमेश्वरस्य ऐश्वर्यमपि काल्पनिकमिति प्रदर्श्य तस्य तत्त्वानुप्रवेशाभाव एव दर्शितः। तमेव इत्यत्र एवकारश्च सगुणभिन्नविषय एव प्रयुक्त नारायणतीर्थाः उपनिषद्गतम् एवकारार्थं स्पष्टीचक्रुः। एतादृशव्याख्याने आचार्यैः शास्त्रसम्प्रदायमनुरुन्धानैः श्रुतिवाक्यमर्यादामनुल्लंघ्यैव तात्पर्यं स्पष्टीकृतमिति विभावनीयम्।

**न च क्लिष्टः परः स्यादनन्तरं विशेषात्।**[14] सूत्रव्याख्याने नारायणतीर्थैः श्रीरामानुजमतं प्रदर्शितम्। श्रीरामानुजास्तावत् जीवानां बहुत्वं भोक्तृत्वम् ईश्वरस्य च एकत्वं प्रयोजकत्वं वास्तवमेव स्वीकुर्वन्ति। भेदाभेदयोर्विरोधात् शुद्धं केवलं वाऽद्वैतं ते नाङ्गी कुर्वन्ति। मृत्योः स मृत्युमाप्नोति यइह नानेव पश्यतीत्यादीनि भेदनिन्दापराणि श्रुतिवाक्यानि तु वैधर्म्यलक्षणं विभागापरनामकं भेदमेव निन्दन्ति। भेदपराणि श्रुतिवाक्यानि च अन्योन्याभावलक्षणं स्वरूपतो भेदमेव वास्तवं कथयन्ति— इत्यादि प्रतिपादयन्ति।

तदीयविवरणविचारणे नारायणतीर्थैरुपनिषद्वाक्यजातमेव समवलंब्य सिद्धान्तो दर्शितः। '**आत्मा वाऽरे द्रष्टव्यः**' इत्यादिना उपक्रम्य, एकविज्ञानेन सर्व विज्ञानप्रतिज्ञाकृता। मध्ये च सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेति भेददर्शनस्य निन्दां परामृश्य द्वैतदर्शनं सर्वमाविद्यकमिति प्रतिपादितम्। ततश्च यत्र त्वस्य सर्वमात्मैवाऽभूत् इति तस्य ज्ञानबाध्यत्वमुक्त्वा अद्वैतज्ञानस्यैव मोक्षसाधनत्वं प्रतिपादितम्।

अतश्च भेदः सर्वोऽपि अविद्याजन्यत्वात्, ज्ञाननाश्यत्वाच्च मिथ्येति वदन्तः नारायणतीर्थाः मिथ्यात्वस्य ज्ञाननिवर्त्यत्वरूपं तृतीयलक्षणमेव अभ्युगच्छन्तः दृश्यन्ते। प्रसङ्गेस्मिन् सत्सोम्य न निभालयसेऽत्र इतीदमुपनिषद्वाक्यमेव अवलम्ब्य तीर्थैः तत्त्वमर्थयोर्लवणोदकयोरिव अभेद एवेति स्पष्टीकृत्य अद्वैतस्य कष्टगम्यत्वबोध एव तादृशवाक्यानां तात्पर्यमित्यभिहितम्। अपि च वैधर्म्यमेव निन्दावाक्यै र्निन्द्यत इति श्रीरामानुजीयैर्यदुक्तंतदपि मानान्तरानधिगतत्वरूप–अपूर्वत्व–लिङ्गबाधेन बाध्यत इति निष्कृष्य दर्शितम्।

**शक्तित्वान्नानृतं चेत्यमिति**[15] सूत्रव्याख्यानेऽपि तीर्थैः उपनिषद्वाक्याधारेण वेदान्तविचारः प्रस्तुतः। चेत्यं प्रधानं नानृतं ब्रह्मनिष्ठसर्वकर्तृतासामर्थ्यरूपत्वात् इति सूत्रार्थं वर्णयित्वा तदग्रे बादरायणमतमिति तैरुपनिषन्मतमेवं दर्शितम्। तत्त्वमसि, अहं ब्रह्मास्मि, प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म – इत्यादि शब्दादभेदानुभवस्य प्रामाण्यं भवति। तेन जीवेश्वरयोरभेदेन ब्रह्मणोऽपि क्लेशादि मत्त्वं भवतीत्यपि न सुसङ्गतं यतः बुद्ध्यनन्तरं भेदनाशेन न भेदकाले जीवधर्मा ईश्वरे प्रसज्यन्त इति सूत्रस्वारस्यं तीर्थैः स्पष्टतया विवृतम्।

अशरीरस्यापि ब्रह्मणः कथमवतारा भवन्तीति कथनसमयेऽपि नारायणतीर्थैः मैत्रायणीयश्रुतिवाक्याधारेण चर्चा कृता। यद्यपि मैत्रायणीय श्रुतौ ब्रह्मणो मायिकोऽपि देहो नास्तीति, अग्न्यादिदेहा एव देहा इति च द्दश्यते तथापि तत्र श्रुतिवाक्यस्य परब्रह्मणः स्वाद्दष्टारब्धभोगार्हशरीरं नास्तीत्यत्रैव तात्पर्यमितिते श्रुतिवाक्यं समगमयन्। तथैव शास्त्रानुसारं व्यवस्थां दर्शयद्भिः तीर्थैर्निष्कर्षरूपेण एवमभिहितंसच्चिदानन्द–घनोऽद्वितीयो निर्विशेष– सर्वकारणत्वाद्युपलक्षितः परमात्मा

परब्रह्मपदाभिधेयो भगवान् एव त्रिगुणमायाविशिष्टः ईश्वरः प्रोच्यते। एतस्यैवावतारा ब्रह्मविष्णुरुद्राः। एते च गुणमात्रोपाधिकत्वाद् गुणावतारा पूर्णा एव–इत्युच्यन्ते। तत्रापि कृष्णः पूर्णः अन्ये त्वंशकला इति तीर्थैरुपनिषद्वाक्याधारेण निष्कर्षः प्रदर्शितः।

एवमेव कीर्तने सर्वाधिकार इति विषयस्य प्रतिपादन समयेऽपि पूर्वपक्षिणा उपनिषद्वाक्योद्धारपूर्वकं यः विचारः प्रस्तुतस्तस्य खण्डने तीर्थैः 'अभिप्रायमनवगतवानसि' इति कथयित्वा तदुपनिषद्वाक्यार्थः स्पष्टीकृतः। कीर्तने सर्वाधिकार इत्यस्य सिद्धान्तस्य खण्डने पूर्वपक्षिणा कथितं यत्–कीर्तने विदुषाम् अधिकारो न भवति यतः '**यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्**'[16] इत्यस्य वाक्यस्याधारेण विद्यावतां सर्वद्वैतबाधः बोध्यतेऽतः कथं वा तेषां कीर्तनेऽधिकार इति पूर्वपक्षिणः आशयः। तत्र उपनिषद्वाक्यस्य अभिप्रायः न सम्यग् अवगत इत्युक्त्वा तीर्थैस्तस्य उपनिषद्वाक्यस्य तात्पर्यं सम्यगाविष्कृतम्। 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यस्योपनिषद्वाक्यस्य 'ब्रह्मलोकं गतस्य विदुषः विविधैश्वर्यसम्भवकस्य स्वभवनस्य युगपदनेकमनस्तत्संबन्धादि –असम्भवैरनुपपत्तिमाशङ्क्य **प्रदीपवदावेशस्तथा हि दर्शयतीति**[17] ब्रह्मसूत्रेण तत्संभवं समर्थ्य अग्रे तस्याप्यसंभव एव श्रुतिद्वारा प्रतिपादित इति तीर्थाः व्याचक्रुः। द्वैतदर्शने तत्त्वज्ञत्वं न संभवति, द्वैतादर्शने च कथं वा तस्य निराकरणादि–सर्वविधोपदेशः शक्य इति तत्र स्पष्टीकृतम्।

शुद्धचित्तानां भगवति विपक्वानुरागिणां परमात्मप्राप्तिः शीघ्रमेव भवति मलिनचित्तानाम् अविपक्वानुरागाणान्तु व्यवधानेन सा भवतीति नारायणतीर्थैः**क्रमैकगत्युपपत्तेस्तु**[18]सूत्रव्याख्याने निगदितम्। परिपक्वानुरागाणां '**न तस्य प्राणा उत्क्रामन्ति**' इति श्रुतेर्गत्यभावेन

भगवदभेदरूपा भगवत्प्राप्तिर्भवति, अपरिपक्वानुरागाणान्तु साधनभक्त्या तल्लोकप्राप्तिः"[19] इति तत्र निष्कर्षो दर्शितः। तर्हि तत्त्वज्ञानद्वारैव भगवत्प्राप्तिः कथितेति कारणेन साधनभक्त्या कथं वा तत्प्राप्तिरिति शङ्कामुपस्थाप्य वेदान्तविचारेऽधिकाराभावेऽपि तत्त्वज्ञानं प्रति साधनभक्तिवेदान्तविचारयोः वैकल्पिकहेतुत्वेन वेदान्तविचारं विनाऽपि साधनभक्त्यैव तत्त्वज्ञानद्वारा भगवत्प्राप्तिः संभवतीति विवृतम्।[20] तत्र श्रोतव्योमन्तव्य इति शान्तो दान्त इति च वेदान्तवाक्यानि चर्चाविषयतया स्वीकृतानि।

एवं स्वकीययाऽनितरसाधरणप्रज्ञया उपनिषद्वाङ्मयं संमथ्य भक्तिसूत्राणामेव तात्पर्यकथनेनैव अतृप्ताः संपूर्णस्य वेदान्तस्यैव सिद्धान्तप्रतिपादने बद्धपरिकरा इमे तीर्थाः स्वव्याख्यानद्वारा जिज्ञासूनां महते उपकाराय भवन्तीति वक्तुं शक्यम्।

## इतिहासवैदुष्यम्

रामायणमहाभारतयोर्मध्ये विशिष्य महाभारततः नारायणतीर्थैर्भक्ति–सम्प्रदायपरका वहवो विषया सिद्धान्तिताः। महाभारते बहुषु स्थलेषु समुपवर्णितस्य भक्तिस्वरूपस्य समाकलनेन भक्तिचन्द्रिका रचितेति वक्तुं शक्यते। तत एव नारायणतीर्थानां महाभारतपण्डित्यमपि निर्धारयितुं शक्यते। यथा –**न च क्लिष्टः परः स्यादनन्तरं विशेषात्**[21] इत्यस्य सूत्रस्य व्याख्यानावसरे ईश्वरस्य मायावशादेव जीवभावो भवतीति प्रतिपादयितुं नारायणतीर्थैः महाभारतगताः सन्दर्भाः प्रदर्शिताः। तथैव '**सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थ–प्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात्**'[22]सूत्रस्य व्याख्यानसमयेऽपि भक्तेः परिशुद्धिः स्मृतिभ्यः कथं

भवतीति महाभारतगतसन्दर्भेभ्यः एव नारायणतीर्थैः प्रत्यपादि। द्वेषादयः भक्तिलिङ्गानि न भवन्तीति च '**द्वैषादयस्तु नैवम्**'[23]सूत्रव्याख्यानसमये बोधयितुं महाभारतस्य अनुशासनपर्वतः श्लोकः समुद्धृतः। मोक्षधर्मपर्वणोऽपि मायास्वरूपं निरूपितम् '**तच्च दिव्यं स्वशक्तिमात्रोद्भवात्**।'[24] यथा शान्तिपर्वतः कृतम्। '**वृष्णिषु श्रेष्ठयेन तत्**।'[25]

'**आनिन्द्ययोनि–अधिक्रियते पारम्पर्यात् सामान्यवत्**'[26] इत्यत्र विशेषरूपेण वनपर्वगतसर्पयुधिष्ठिरसंवादस्य आधारेण ब्राह्मणत्व निर्धारणं यत् कृतं तत्सर्वथा विदुषां तोषावहम्। मतङ्गोपाख्यानादेः कथं वा तात्पर्यमवधारणीयमिति तात्पर्यनिर्धारणञ्च सकौशलं कृतम्[27]। तथैव **क्रमैकगत्युपपत्तेस्तु**[28] इत्यस्य व्याख्यानावसरेऽपि महाभारतशान्तिपर्वगतानां श्लोकानामाधारेण व्यूहक्रमेण गतिरभिहिता। तत्र भक्तिफलविषये निरूपितं यत्–परिपक्वानुरागाणां भगवदभेदरूपा भगवत्प्राप्तिर्भवति तथा अपक्वानुरागाणान्तु साधनभक्त्या भगवल्लोक प्राप्तिर्भवतीति सप्रमाणमुपदर्शितम्।[29]

**परां कृत्वैव सर्वेषां तथा ह्याह**[30] सूत्रेऽपि गङ्गामाहात्म्य निरूपणं महाभारताधारेण कृतम्[31] अग्रे च भूतानामुद्वेगं यो न जनयति सः नारायणस्य अनुग्रहपात्रं भवतीति प्रतिपादितम्।[32]

फलमस्माद् बादरायणो दृष्टत्वात्[33] इत्यस्य तात्पर्यनिर्धारणार्थं नारायणतीर्थैः यादृशं वैदुष्यं प्रदर्शितं तत् सर्वथा जिज्ञासूपकारकम्। ईश्वरः कथं वा जीवेभ्यः फलं प्रयच्छतीति विषयं पुरस्कृत्य तत्र चर्चा विहिता। अज्ञानी पुरुषः स्वयं कर्मसु प्रवृत्तः तत्तत्फलं प्राप्य ईश्वरप्रेरितः स्वर्गं नरकं वा गच्छेत्। क्षेत्रनामकमिदं शरीरं शुभाशुभफलप्रदं कर्म

करोति। परन्तु धर्माचरणेन एतच्छरीरद्वारा मनुष्यः दुःखस्यान्तं गन्तुं शक्नोति। एवं धर्म एव अवश्यं फलनीयः स च अविगीतशिष्टाचारविषय इति नारायणतीर्थैः महाभारतप्रसङ्गतः धर्मस्य अवश्यपालनीयत्वं प्रतिपादितम्।

**व्युत्क्रमादप्ययस्तथा हि दृष्टम्**[34] इत्यस्य सूत्रस्य व्याख्याने कारणे कार्यस्य लयः कथं भवतीति महाभारतस्यप्रसङ्गतः एव दर्शितम्। पृथिवी जले, जलं वह्नौ, वह्निः वायौ, वायुः आकाशे, आकाशश्च मनसि मनः व्यक्ते, व्यक्तमव्यक्ते, अव्यक्तं पुरुषे च लीयत इति ततः केवलः पुरुषो भवतीति महाभारतप्रमाणेन स्पष्टीकृतम्।

एवं भक्तिचन्द्रिकाव्याख्याने तत्र तत्र प्रसङ्गानुसारं महाभारतप्रमाणेन ते–ते विषयाः निरूपिताः।

## पुराणवैदुष्यम्

नारायणतीर्थानां पुराणवैदुष्यमपि अतीवगंभीरं वर्तते। स्थाने स्थाने पुराणवाक्यान्युद्धृत्य भक्तिसिद्धान्ताः चर्चिताः। यथा – **सा परानुरक्तिरीश्वरे**[35] इत्यस्य भक्तिलक्षणपरस्य सूत्रस्य व्याख्याने जगदाराध्यपरमेश्वरविषया रक्तिरेव भक्तिरिति सा च लौकिकानुरागादाविव ज्ञेयेति विवृण्वद्भिः नारायणतीर्थैः विष्णुपुराणतः[36] प्रह्लादस्य वचनमुद्धृतम्। या प्रीतिः अविवेकिनां विषयेषु भवति सा त्वामनुस्मरतः मम हृदयात् माऽपसर्पतु इति कथयता प्रह्लादेन भक्तिविवशत्वं परत्वञ्च सूचितम्। तथैव कोटिकोटिजन्मस्वपि त्वयि सदा अच्युता भक्तिरस्त्विति भक्तस्य मनः विष्णुपुराणतः एव आविष्कृतम्।

भक्तिसंप्रदायशिरोमणेः श्रीभागवतादपि संदर्भानुसारं प्रमाणानि दर्शितानि। प्रेम्णः द्वैविध्यप्रदर्शने ईशप्रसादजः भावजश्च प्रेम इति भागवतवचनं दर्शितम्[37]भावः ईशभक्तप्रसादजोऽपि भवतीति भागवतात् वचनानि दर्शितानि।[38] प्रेम द्वादशधा निरुक्तमखिलैर्भक्तैः यदास्वादितं गोपीभिः हरिपादपद्ममकरन्दानन्दपूर्णात्मभिः – इत्यत्रापि प्रेम्णः उप्त, पत्त, ललितादिद्वादशप्रकाराः भागवताधारेण निरूपिताः। विषयोऽयं चतुर्थाध्याये विस्तरेण चर्चितः।

तथैव भूमिकाभेदतः लब्धज्ञानस्य फलनिरूपणसमये भगवत्पात्रता कथं भवतीति ध्रुवनारदसंवादतः समर्थितम्। हरेरेव पादसेवनं सर्वेषामात्मश्रेयःकामुकानां शरणमिति नारदवचनतः समर्थितम्।

भगवद्धर्मश्रद्धा भक्तिजन्यभूमिकासु परमा चतुर्थी भूमिकेति यदूत्तमस्य लीलाप्रसङ्गवर्णनेन कृत्स्नभागवतशास्त्रे दर्शितमिति भागवताधारेण निरूपितम्। प्रेमविवृद्धिनामकसप्तमभूमिकायाः वर्णनमपि भागवतगत–प्रह्लादप्रसङ्गस्य एव आधारेण कृतम्। भगवति मनसः समुल्लासः स्वानन्दमाविर्भावयन् रसरूपो रत्याख्यः स्थायी भावो मोक्षमपि न्यक्कुर्वन् फलभक्तिरूपेण परिपक्वो भवतीत्यपि भागवतप्रमाणतः विवृतम्।

भक्तिरसस्वरूपनिरूपणसमयेऽपि आलम्बनविभावस्य उदाहरणरूपेण श्रीहरिकथानमपि भागवतप्रमाणतः कृतम् यत्र श्रीहरिस्वरूपवर्णनं कृतम्।

पुराणेतिहासाभ्यां शिष्टाचारादपि भक्तिः प्रमेया भवतीति भक्तिसंप्रदाय–सिद्धान्तं निरूपयद्भिः नारायणतीर्थैः 'पृथु–ध्रुव–प्रह्लाद–अम्बरीष–शुक–सनक–नारदानां भजनाचाराच्च भक्तिः कथं प्रमेया भवतीति भागवतोदाहरणैः सम्यगाविष्कृतम्। विहिताऽविहितरूपेण द्विधा कथितायाः

भक्तेरुदाहरणद्वारा—निरूपणकाले भागवतप्रमाणानि दर्शितानि। ईश्वरः प्रसन्नः सन् भक्तस्य प्रारब्धादिकं नाशयित्वा मोक्षं प्रयच्छतीति च भागवतप्रमाणतः निरूपितम्।[39]

'**लघ्वपि भक्त्यधिकारे महत्क्षेपकमपरसर्वहानात्**'[40] इत्यस्य सूत्रस्य व्याख्याने महद् वैलक्षण्यं दृश्यते। तत्र सुकरमपि भक्तिरूपं साधनं महतो दृढभूमेः अज्ञानस्य नाशकं भवति, भक्त्यधिकारे ज्ञानवैराग्यादीनामपरेषां त्यागकथनादिति सूत्रार्थः भागवताधारेण कैश्चिद् कथितोऽपि चिन्त्य इति कथयित्वा नारायणतीर्थैः भागवतस्यैवाधारेण सूत्रार्थः अन्यथा व्याख्यातः। लघ्वपि कीर्तनादिकं भक्त्यधिकारे महतः पापस्य क्षेपकं नाम नाशकं भवतीति ततः अन्यस्य कर्मणो हानं भवतीति च भागवताधारेण कैश्चित् कृतं व्याख्यानमपि तैः चिन्त्यमित्येव कथयित्वा तिरस्कृतम्।

अत्र महत्क्षेपकमित्यस्य महतः पापस्य क्षेपकमिति षष्ठीसमासानुसारं कथितं व्याख्यानं निराकृत्य लघ्वपि महत् इत्येव प्रथमान्ततया स्वीकृत्य सूत्रार्थस्वारस्यं रक्षितमाचार्यैः।'**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्**'[41] इत्यस्य सूत्रस्य व्याख्यानेऽपि नारायणतीर्थैः महता परिकरेण समन्वयः साधितः। शास्त्ररहस्यमपि समुद्घाटितम्। भक्तौ कोऽधिक्रियत इति भक्तौ अधिकारिनिरूपणे शाण्डिल्यमहर्षिणा 'निन्दितचण्डाल—योनिपर्यन्तः सर्वोऽपि जन्तुः भक्तावधिक्रियते उपदेशपारम्पर्यात्' इति भावयता सूत्रं न्यबन्धि। अत्र नारायणतीर्थास्तावद् भागवताधारेण विषयममुं प्रतिपादयन्तो भक्तौ सर्वेषामधिकारं समर्थयामासुः।

प्रसङ्गेस्मिन् नारायणतीर्थैः वेदानामिव पुराणानामपि दृष्टार्थमेव अध्ययनमिति सङ्कीर्तनमपि वैदिकमेवेति पौराणेषु कर्मसु चतुर्णां

वर्णानामधिकारो भवतीति निर्णीतम्। चाण्डालादीनामपि निषादस्थपति न्यायेन गुणनामकीर्तनेषु अधिकारोऽस्तीति नारायणतीर्थाः प्रत्यपीपदन्। अत्र पद्मपुराण–भागवतपुराणतः प्रमाणानि तैः समुद्धृतानि।

धर्ममेघसमाधिं प्राप्तवतो भोगः भक्तिर्वा कथं भवेदित्याशङ्क्य तस्य क्लेशाः विवेकज्ञानाग्निना दग्धा इति कारणेन भोगाभावेऽपि रतिविशेषरूपा भक्तिस्तु भवेदेवेति नारायणतीर्थैः व्याख्यातम्।

श्रवणादिपरिपाके च साक्षात्कृतात्मतत्त्वस्य **समाधौ** कूटस्थस्याभिन्ने ब्रह्मणि सच्चिदानन्दघनेऽनवच्छिन्ने रतिविशेषरूपं प्रेम भवति। **व्युत्थाने** च तत्तद्व्यवहारमनुसृत्य कीर्तनादिभक्तिः भवति इति प्रतिपादयद्भिराचार्यैः समाधिव्युत्थानावस्थाभेदेन सगुण–निर्गुणरूपेण भक्तिभेदो भागवताधारेणैव वर्णितः। समाधौ निर्गुणध्यानं व्युत्थाने सगुणध्यानमिति व्यवस्था काचिदत्र दर्शिता।[42]

ज्ञानान्तानां सर्वेषां धर्माणां '**परां कृत्वैव सर्वेषां तथा ह्याह**'[43]इति सूत्रोक्तरीत्या परमेश्वरे परां भक्तिमुत्पाद्यैव श्रेष्ठत्वं नान्ययेति प्रतिपादयद्भिर्नारायणतीर्थैः भागवतप्रमाणमेव दर्शितम्। स्वप्नेश्वराचार्यैस्तु भगवद्गीतावाक्यं प्रमाणत्वेनोदाहृत्य सूत्रार्थः समर्थितः। नारायणतीर्थास्तावत् भागवतस्य प्रथम–द्वितीय–द्वादशतम–स्कन्धेभ्यो विविधान् श्लोकानुदाहृत्य भक्तेः श्रेष्ठत्वं प्रत्यपादयन्।

एतावदेवन पुनश्चाग्रे ज्ञानमार्गो भक्तिमार्गश्चेति मोक्षमार्गद्वयं भवतीत्युक्त्वा चतुर्थमार्गरूपेण अष्टाङ्गयोगस्य स्वीकरणस्य आवश्यकता सुतरां नास्तीति दर्शयद्भि नारायणतीर्थैः भागवतपुराणाधारेणैव अष्टाङ्गयोगस्यापि ज्ञानभक्तियोगयोः

साधनत्वमुपदर्शितम्। तस्मिन्नेव प्रसङ्गे पुनः भक्त्यङ्गानां कथने भागवतश्लोका एव प्रमाणीकृताः।

अनयारीत्या संपूर्णे व्याख्याने भागवतादि पुराणवाक्यानि प्रमाणीकृत्यैव नारायणतीर्थैः भक्तिस्वरूपादिकं महता आदरेण प्रतिपादितम्। तत्तत्सन्दर्भे योग्यानां संदर्भानां प्रमाणवाक्यानाञ्चोल्लेखेन स्वसिद्धान्तानां प्रामाण्यमेव नारायणतीर्थैः संस्थापितमिति दृश्यते।

एवमेव इतरपुराणेभ्योऽपि वाक्यानि समुद्धृतानि यथा –

1. विष्णुपुराणम्[44] 2. बृहन्नारदीयपुराणम्[45]

3. वाराहपुराणम्[46] 4. आदित्यपुराणम्[47]

5. भविष्यत्पुराणम्[48] 6. पद्मपुराणम्[49]

7. पाराशरपुराणम्[50] 8. स्कान्दपुराणम्[51]

9. नृसिंहपुराणम्[52]

एतत्सूचीतः स्पष्टं ज्ञायते यत् महापुराणेभ्यो यथा वाक्यानि प्रमाणतया स्वीकृतानि तथैवोपपुराणेभ्योऽपि स्वीकृतानीति। एतेन नारायणतीर्थानां पुराणज्ञानस्य गाम्भीर्यं विषयप्रतिपादनकौशलञ्च स्पष्टीभवतः।

**ब्रह्मसूत्राणां संदर्भाः**

भक्तिचन्द्रिकाव्याख्याने नारायणतीर्थैर्बहुधा ब्रह्मसूत्राणि प्रमाणत्वेन दर्शितानि तेषामाधारेण च तत्र तत्र वेदान्तसिद्धान्ताश्च न्यरूपिषत। ब्रह्मसूत्रसंदर्भास्तावदेवं वर्तन्ते –**तयोपक्षयाच्च**[53] इत्यस्य सूत्रस्य व्याख्याने भक्त्या मुक्तिं प्रति ज्ञानमुपक्षीणं भवतीति कथयित्वा भक्तिं प्रत्येव ज्ञानस्य हेतुत्वकथनेन मोक्षं प्रति तदन्यथासिद्धं भवतीति च

दर्शितम्। प्रेमलक्षणा सा भक्तिरेव पुरुषार्थः। अत्र तीर्थास्तावत् अज्ञाननाशं मोक्षं न मन्वते स्वप्रकाशनिजसंवित्स्वरूपा भक्तिरेव मोक्ष इति तेषां मतम्। तत्र प्रेमलक्षणया भक्त्या अज्ञाननाशरूपमोक्षस्य उपक्षयोऽपि तैर्दर्शितः। अत एव ब्रह्मावाप्तिरपि विजातीयप्रेमोपलक्षिता इति भगवदभजनमेव सर्वानर्थकरमिति तद्भजनमेव भगवत्प्राप्तिहेतुरिति कथयन्तः '**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ**'[54]ब्रह्मसूत्रप्रमाणेन सिद्धान्तं प्रत्यपादयन्। जीवस्य बन्धमोक्षयोः कारणं परमेश्वरस्य प्रसादकोपावेवेति तदर्थः।

**बुद्धिहेतुप्रवृत्तिः आविशुद्धेः अवघातवत्**[55] इत्यस्य सूत्रस्य व्याख्यानेऽपि तीर्थैः सूत्रगतस्य प्रवृत्तिशब्दस्य तात्पर्यमभिदधानैः प्रवृत्तिरसकृदावृत्तिरित्यर्थो दर्शितः। ब्रह्मप्रतिपत्तिहेतूनां श्रवणमनननिदिध्यासनानां भक्तिपरिशुद्धिपर्यन्तम् असकृदावृत्तिः करणीयेति सूत्रार्थस्य विवरणे '**आवृत्तिरसकृदुपदेशात्**'[56] इति ब्रह्मसूत्रमेव प्रमाणत्वेन दर्शितम्। अनेन सूत्रेण तीर्थाः साधनावृत्तिमेव समर्थयन्ति। श्रोतव्यो मन्तव्य इत्येवं जातीयको हि–असकृदुपदेशः प्रत्ययावृत्तिं सूचयति अतः प्रत्ययावृत्तिः कर्तव्येति शाङ्करभाष्यानुसारमिदं व्याख्यानं कृतम्।

साङ्गाबुद्धिरभ्यसनीया–इत्यत्र भेदविषया, उत, अभेदविषया वा बुद्धिरभ्यसनीयेति जिज्ञासायां '**आत्मैकपदां बादरायणः**'[57] इत्यनेन सूत्रेण समाधानं दत्त्वा आत्मविषयिणीम् अखण्डैकविषयिणीं बुद्धिमभ्यसनीयत्वेन भगवान् व्यासो मन्यत इति कथयित्वा शाण्डिल्याचार्याः भेदविषयाम् अभेदविषयाञ्च बुद्धिमङ्गीकरोति[58]–इति सूत्रेण समन्वयो दर्शितः। तत्र व्यासमहर्षिमतसमर्थनरूपेण तीर्थैः '**आत्मेति तूपगच्छन्ति ग्राहयन्ति च**'[59]

इति ब्रह्मसूत्रमेवप्रमाणत्वेन दर्शितम्। तथाहि – परमेश्वरः आत्मेत्येव प्रतिपत्तव्यः। जाबालास्तथातम् उपगच्छन्ति तथाऽन्येऽपि 'तत्त्वमसि' इत्यादिवाक्यविशेषाः आत्मत्वेनैव परमेश्वरं ग्राहयन्ति इति सूत्रार्थः।

**ऐश्वर्यं तथेति चेन्न स्वाभाव्यात्**[60] इति सूत्रव्याख्याने तीर्थैः ब्रह्मसूत्रप्रमाणं प्रदर्शितम्। परमेश्वरस्य ऐश्वर्यमुपाधिकृतमिति हेतोः बाध्यत इति चेन्न, तदैश्वर्यं परमेश्वरस्य स्वभाव एव। न हि कस्यचित् स्वभावो बाध्यत इति सूत्रार्थः। अस्य व्याख्यानावसरे तीर्थैः कथं वा पारमैश्वर्यं स्वाभाविकं भवतीति '**आनन्दादयः प्रधानस्य**'[61] इत्यस्य सूत्रस्य प्रामाण्येन दर्शितम्। आनन्दादयः ब्रह्मधर्माः सर्वे सर्वत्र प्रतिपत्तव्याः यतः सर्वत्र हि तदेवैकं ब्रह्म न भिद्यत इति वेदान्तराद्धान्तः। एवञ्च ऐश्वर्यादिकं ब्रह्मणः स्वाभाविकमिति तद्द्वारा सिद्ध्यतीति नारायणतीर्थाः व्याचक्रुः।

आप्तकामोऽपि भगवान् प्रयोजनाभावे कथं शरीरं परिगृह्णीयादिति शङ्कापनोदनार्थं '**मुख्यं हि तस्य कारुण्यम्**'[62] इति भक्तिसूत्रमवतारितम्। परमेश्वरस्य निरूपाधिकारुण्यवशादेव जगज्जन्मादिकमिति सूत्रार्थः। अस्य व्याख्याने तीर्थाः परमेश्वरस्य कारुण्यमेव भगवता बादरायणेन लीलेति कथ्यत इत्याहुः। अत्र '**लोकवत्तु लीलाकैवल्यम्**'[63] इति सूत्रमपि तदीयं प्रमाणयामासुः एतदेव मध्येऽपि दर्शितम्। एवमेव वासुदेवेऽपि प्राणित्वसत्त्वात् तत्र भक्तिर्न मुक्तिफलेति शङ्कासमाधानायं '**वासुदेवेऽपीति चेन्न, आकारमात्रत्वात्**'[64] इति सूत्रं महर्षिणा प्रदत्तम्। तत्र वासुदेवे मनुष्याकारकत्त्वेऽपि जीवत्वं नास्त्येवेति सूत्रार्थः। तत्समर्थनाय तीर्थैस्तावद् ब्रह्मसूत्रमेव प्रमाणतयोदाहृतम्'**अन्तस्तद्धर्मोपदेशात्**'[65] इति य एषोन्तरादित्ये इतयादिषु श्रूयमाणः पुरुषः परमेश्वर एव यतः तत्र तस्यैव धर्मा उपदिष्टाः

इति सूत्रार्थः। एवमेव वासुदेवेऽपि भगवत एव धर्मा उपदिष्टा इति कारणेन वासुदेवः परमेश्वर एव न जीव इति सूत्रार्थो व्याख्यातः श्रीमद्भिः।

**ध्याननियमस्तु दृष्टसौकर्यात्**[66] इत्यस्य भक्तिसूत्रव्याख्यानेऽपि नारायणतीर्थैर्ब्रह्मसूत्रप्रमाणेन सूत्रार्थो वर्णितः। तथाहि ध्याने ध्येयनियमो नास्ति यथाभिमतध्यानादेव चित्तप्रसादरूप सौकर्यादिति सूत्रार्थं कथयित्वा विषयेऽस्मिन् '**यथाभिमतध्यानाद्वा**'[67] इति योगसूत्रं '**यत्रैकाग्रता तत्राविशेषात्**'[68] इति ब्रह्मसूत्रञ्च प्रमाणमिति तैः प्रदर्शितम्।

'**क्रमैकगत्युपपत्तेस्तु**'[69] इतिभक्तिसूत्रस्य व्याख्याने तीर्थैः महती चर्चा विहिता। प्रासङ्गिकाननेकान् विषयान् अधिकृत्य विहितेयं चर्चा नूनमेव विदुषां विविदिष्वणाञ्च मोदायोपकाराय च भवतीति निःशङ्कं वक्तुं शक्यते। तत्र '**उत्क्रान्तिवाक्यशेषाच्च**'[70] इति सूत्रं सुषुम्णामार्गेण प्राणोत्क्रान्त्या ब्रह्मलोकादिगमनमपि अपरिपक्वानुरागाणामेव साधनभक्तिमात्रवताम् इत्यत्र साधकान्तरमनेन सूत्रेण कथितमिति वर्णयित्वा पुनः सन्ततानुष्ठितभगवद्– भजनस्यापि पुरुषस्य दुष्टसामग्र्या इव दुष्टप्रारब्धस्यापि दुर्वासनोद्बोधकत्वस्य सम्भवात् उद्धार एव न भवेदिति शङ्काभवति तथैव हि भरतराजर्षिविषये दृष्टम्। तत्र भगवच्चिन्तनपरेण पुरुषेण दृष्टद्वारा प्राप्यमाणाऽसत्संगतिः परिहार्या सत्संगत्या इति कथयित्वा सुकृतदुष्कृतयोः सुकृतस्य अपरोक्षज्ञानासंश्श्लेषः दुष्कृतस्य अपरोक्षज्ञानमात्रनाश्यता इति नारायणतीर्थैः व्यवस्था दर्शिता। तत्रैव '**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्दर्शनात्**' इति इतरस्यापि **एवमसंश्लेषपाते तु**' इति च ब्रह्मसूत्रे प्रमाणत्वेन दर्शिते[71]। परमात्मसाक्षात्कारे उत्तरपापस्य

असंश्लेष पूर्वपापस्य च नाशः इति त्रयोदशतमसूत्रार्थः। न केवलमेवं आगामि–सञ्चितयोरितरस्यापि प्रारब्धस्यैवमेव असंश्लेषनाशौ ज्ञेयाविति चतुर्दशतमस्य सूत्रस्यार्थः।

'**महापातकिनान्तु आर्तौ**'[72] इति भक्तिसूत्रं महापापपराणां तथा अनुतापरूपायाम् आर्तौ सत्यां भक्तिद्वारा दिव्यगतिर्भवत्येवेति प्रतिपादयति। तत्र च तीर्थैः '**उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्**'[73] इति ब्रह्मसूत्रं प्रमाणीकृत्य सूत्रार्थः विशदीकृतः। अत्र आर्तावेव महापातकिनां दिव्यगतिर्भवतीति कथं? ज्ञानेनैव सकलपापनिवृत्तौ तादृश्याः आर्तेरपेक्षैव नास्तीति शङ्कायां **सैकान्तभावे गीतार्थप्रत्यभिज्ञानात्**[74] इति सूत्रं समाधानरूपेण दत्तम्। सैकान्तभावशब्दव्याख्याने च तीर्थैः '**आप्रयाणात् तत्रापि हि दृष्टम्**'[75] इति ब्रह्मसूत्राधारेण अव्यभिचरितेन भावेन सा दिव्यगतिः प्राप्यत इति समर्थितम्। '**फलमस्माद् बादरायणो दृष्टत्वात्**'[76] इत्यस्य सूत्रस्य व्याख्यानेऽपि परमेश्वर एव विहित–निषिद्ध–कर्मफलं जीवेभ्यः अनुगृह्णातीति '**फलमत उपपत्तेः**'[77] इत्यस्य सूत्रस्य आधारेण विशदीकृतम्।

कारणे कार्यस्य लयो भवति तथाहि लोके दृष्टमिति '**व्युत्क्रमात्**'[78]इत्यादि सूत्रेण प्रतिपादितम्। कोवाऽयं क्रमः इति निरूपणार्थं तीर्थैस्तावत् '**विपर्ययेण क्रमोऽत उपपद्यते च**'[79] इति ब्रह्मसूत्रमेव शरणीकृतम्। तादृशविषयविवेचनाय ब्रह्मसूत्रमेव परमं प्रमाणं मन्वानाः तीर्थास्तावत् 'येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेण अवरोहतीति लोके दृष्टम्। तथा सर्वं कार्यजातं परमकारणं परमसूक्ष्मञ्च ब्रह्माप्येतीति वेदान्तसिद्धान्तमत्र न्यदीदर्शन्।

'**अनन्यभक्त्या तद्बुद्धिलयात् अत्यन्तम्**'[80] इति सूत्रे अनन्यभक्त्या जीवस्य अन्तःकरणस्य अत्यन्तं लयात् मोक्षो भवतीति कथितम्। तत्र प्रलयादौ अन्तःकरणस्य सत्ताङ्गीकार्यैवेति तीर्थाः अभिप्रयन्ति। अन्यथा ब्रह्मसूत्रविरोधोभवतीति तैर्दर्शितम्। तथाहि – यावदेवचायं बुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वञ्च इत्येतदर्थकं सूत्रं '**यावदात्मभावित्वाच्च न दोषः, तद्दर्शनात्**'[81] कर्मणः अनुस्मृतितः शब्देभ्यः विधिभ्यश्च जीवः सुप्तः एव स्वास्थ्यं गतः पुनरुत्तिष्ठतीति बोधयत् सूत्रं '**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः**'[82] इति बोधयती अन्तःकरणस्य सत्तानङ्गीकारे विरोधं भजत इति वेदान्तविचारं नारायणतीर्थाः प्रस्तुवन्ति।

'**आयुश्चिरमितरेषान्तु हानिरनास्पदत्वात्**'[83] इत्यस्य सूत्रस्य– अनन्यभक्तस्यायुश्चिरं भवति, सञ्चितानागतानान्तु हानिरेव भवति तयोरनास्पदत्वात्' इति भावः। तत्र कथं वा प्रारब्धशेषेण तदितरेषां नाश इति विवरणं कुर्वद्भिः नारायणतीर्थैः'**तदधिगम उत्तरपूर्वाघयोरश्लेष–विनाशौ तद्व्यपदेशात्**'[84] इति सूत्राधारेण बादरायणमतमेव दर्शितम्। तस्मिन् सूत्रे तु अश्लेषविनाशौ–इत्यस्य शब्दस्य स्वसमानाधिकरणफलाजनकत्वमित्यर्थः ज्ञेय इति नारायणतीर्थानां मतम्। प्रारब्धं कर्म तु स्वसमानाधिकरण–फलजनकमेवेति कारणेन तन्न नष्टमिति शास्त्ररीतिः।

तर्हि भगवद्गीतासु '**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन**'[85] इत्यत्र सर्वकर्मनाशः कथं वा संगच्छेत प्रारब्धशेषे? इति प्रश्नो भवितुमर्हति। तत्र सर्वशब्दः प्रारब्धेतर कर्मपर एवेति सिद्धान्तकरणे नारायणतीर्थैः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यं इति श्रुतिवाक्येन साकं '**भोगेन**

**त्वितरे क्षयित्वाऽथ संपद्यते'**[86]इति ब्रह्मसूत्रं प्रमाणतया दर्शितम्। भोगेन प्रारब्धं क्षपयित्वैव जीवन्मुक्तो मोक्षं भजतीति तदर्थः। प्रारब्धं न नश्यतीत्यत्र सूत्रमिदं प्रमाणम्।

एवं रीत्या नारायणतीर्थैः प्रसङ्गानुसारं भक्तिचन्द्रिकायां महताऽदरेण ब्रह्मसूत्रेण ते ते सिद्धान्ताः स्पष्टीकृताः। अत एव न केवलं सूत्रार्थावगमने परन्तु संपूर्णस्य शास्त्रस्य बोधने बद्धपरिकरा इमे शास्त्रानुगामि व्याख्यानमारचयन्तः सर्वथा सुद्ध्युपास्या भवन्तीति सुस्पष्टम्। ब्रह्मसूत्राणामुल्लेखेन व्याख्यानस्य प्रामाण्यं वर्धत इति तु सत्यं तेनैव सह पठितृणां शास्त्रान्तरविषयकज्ञानेन शास्त्रसम्प्रदाये समीचीना गतिरपि भवतीति दृश्यते।भक्तिचन्द्रिकाव्याख्यानात् स्पष्टमेतज्ज्ञायते यत् नारायणतीर्थाः सर्वशास्त्रपारङ्गता इति। अत एव तेषु तेषु संदर्भेषु शास्त्रसंप्रदाय– मनुरुन्धानैस्तैः शास्त्रप्रमाणमुद्धृत्यैव चर्चा विहिता। क्वचित् पूर्वपक्षखण्डनपुरःसरं सिद्धान्तपक्षः स्थापितः।

**तत्संस्थस्यामृतत्वोपदेशात्**[87] इत्यस्य सूत्रस्य व्याख्याने परमेश्वरे इतरानुरागत्यागेन परानिष्ठा यस्य भवति सः अमृतत्वं प्राप्नोतीति सूत्रार्थं व्याख्याय ततश्च तत्संस्थशब्दस्य प्रणवनिष्ठापरत्वमपि भवतीति ततश्च तस्मिन् ब्रह्मप्रतीके प्रणवे यस्य निष्ठा भवति स अमृतो भवतीति तीर्थैः सुष्ठु व्याख्यातम्। तत्र योगसूत्राणि प्रमाणतया दर्शितानि यथा –**'ईश्वरप्रणिधानाद्वा, तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनम्, ततः प्रत्यक्चेतनाऽधि गमोऽप्यन्तरायाभावश्च'**[88] इत्येतैः सूत्रैः भगवता पतञ्जलिनाऽपि प्रणवनिष्ठस्य साधकस्य फलप्राप्तिः प्रतिपादिता–इति योगसूत्रद्वारा भक्तिसूत्रस्य समर्थनं कृतम्। **गौण्या तु समाधिसिद्धिः**[89]

इत्यस्यापि भक्तिसूत्रस्य व्याख्याने**ईश्वरप्रणिधानाद्वा, तज्जपस्तदर्थभावेन–मित्येतत्** सूत्रद्वयं प्रमाणत्वेनोदाहृतम्।

**योगस्तूभयार्थमपेक्षणात् प्रयाजादिवत्**[90] इत्यस्य सूत्रस्य व्याख्याने योगः भक्तिज्ञानाभ्यामपेक्षित इति योगेन भक्तिर्दृढा भवतीति तीर्थैर्व्याख्यातम्।

ईश्वरः स्वसंकल्पकृतचित्ताद्युपाध्यनन्तरं स्वविहारार्थमेव विरुद्धानेकधर्मवान् भवति। अतो न कोऽपि क्लेशादिदोष इति **'न च क्लिष्टः परः स्यादनन्तरं विशेषात्'**[91] इत्यस्य सूत्रस्य भावः। कथमीश्वरः स्वतः पूर्णोऽपि तारतम्यवान् भवतीति विशदयितुं तीर्थैः **'निर्मातृचित्तावच्छेदेन किञ्चिदज्ञ एव सन् यथा योगी कायव्यूहादौ स्वसंकल्पात् निर्माणचित्तावछेदेन वर्तते तथा 'ईश्वरोऽपि वर्तत'** इति योगोदाहरणेन विषयः प्रस्तुतः।[92]

एतच्च निर्माणचित्तान्यस्मितामात्रात् इत्येतत् सूत्रमनुसृत्य कृतं व्याख्यानमिति स्पष्टं ज्ञातुं शक्यते।

**'ईश्वरतुष्टेरेकोऽपि बली'**[93] तिसूत्रव्याख्याने कीर्तनादिषु यः कश्चिदेकोऽपि अभ्यासानुरागादि–गुणयुक्ततया ईश्वरतुष्टि–विशेषजनकः चेत् स एव बली भवतीति सूत्रार्थमभिधाय ततश्च बलीत्यस्य शब्दस्य स्पष्टीकरणे बलित्वेन क्लेशनाशकत्वं सुखदत्वञ्च ज्ञापितमिति नारायणतीर्थैः कथितम्। ततश्च क्लेशशब्द व्याख्याने क्लेशः कर्माशय इति तद्बीजमविद्येति, अविद्यास्मिता रागद्वेषाभिनिवेशाः क्लेशा इति तत्र कर्माशयः प्रारब्धाप्रारब्धभेदेन द्विविध इति च कथितम्। सर्वमेतत् योगशास्त्रगतमेव। तत्र तद्विषयकाणि सूत्राणि यथा –

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः।[94]

अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाहरणानाम्।[95]

कर्माशयः दृष्टादृष्टजन्मवेदनीयः।[96]

जात्यायुर्भोगाः कर्माशयः।[97]इति।।

'**ध्याने नियमो नास्तीति**'[98] स्पष्टयितुं सूत्रव्याख्याने '**यथाभिमतध्यानाद् वा**'[99] इत्येतत् योगसूत्रं प्रमाणत्वेन दर्शितम्।

**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्**[100] इत्येतत्सूत्रस्य व्याख्यानेऽपि प्रारब्धभोगानन्तरमेव परममुक्तिरिति कथयित्वा द्वैतमिथ्यात्वमेव सिद्धान्ते स्वीकृतं न तु द्वैतलोप इति शास्त्ररीतिमुपपाद्य पूर्वपक्षरूपेण द्वैतादर्शनसमर्थने '**प्रसंख्याने अपि अकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघसमाधिः**'[101] इति योगसूत्रम् समुद्धृतं तीर्थैः। पुनश्च तन्निराकृत्य श्रवणादिपरिपाके साक्षात्कृतात्मतत्त्वस्य समाधौ अभिन्ने ब्रह्मणि सच्चिदानन्दघने रतिविशेषरूपं प्रेमानुभूतं भवतीति,[102] समाधौ वा व्युत्थाने वा विद्वान् सर्वं न वेत्ति इत्यत्र समाधौ स्वाभिन्नभगवत्स्वरूपप्रेमानन्दनिमग्नत्वं कारणं चेत् व्युत्थाने भगवद्गुणगणानन्दनिमग्नत्वं कारणमिति तीर्थाः शास्त्ररहस्यं व्याचख्युः।

बहुविधकर्मसु यस्य कर्मणो यादृशो विपाको भावी तदनुगुणवासनाया एवोद्गमो भवितुमर्हतीति '**उत्क्रान्तिवाक्य–शेषाच्च**'[103] इत्यस्य सूत्रस्य व्याख्याने सम्यगभिधाय तत्र प्रमाणरूपेण '**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिः वासनानाम्**'[104] इति योगसूत्रं तीर्थैः प्रदर्शितम्।हिंसायुक्तं कर्म कथं वा हितकारि भवेदित्याशङ्कां परिहर्तुं '**मिश्रोपदेशान्नेति चेन्न स्वल्पत्वात्**'[105] इति सूत्रमवतारितम्

शुभफलककर्मापेक्षया हिंसाया अल्पनिष्टफलमस्तीति सूत्रार्थं कथयित्वा **नारायणतीर्थैः** **'स्वल्पः संकरः सपरिहारः सप्रत्यवमर्शः'** इति पञ्चशिखाचार्याणां वाक्यमेकमुद्धृत्य सांख्यशास्त्रवैदुष्यमपि प्रकटीकृतम्।

एवं योग्यसंदर्भेषु सांख्ययोगप्रमाणाद्धरणेन नारायणतीर्थैः शास्त्रमर्यादा परिरक्षणपुरःसरं भक्तिसंप्रदायोऽपि परिपालित इति वक्तुं शक्यते।

**यायवैशेषिकशास्त्रवैदुष्यम्**

नारायणतीर्थाः स्वयं बहुशास्त्रकोविदाः। षट्स्वपि दर्शनेषु प्रामाणिकग्रन्थानां व्याख्यारूपेण तैः महान्तो ग्रन्था निरमायिषता। न्यायशास्त्रे न्यायचन्द्रिकेति कारिकावलि व्याख्यानमतिप्रसिद्धम्। एवमेव सत्तर्करत्नाकरनामको ग्रन्थोऽपि प्रसिद्धिं गतः।

भक्तिचन्द्रिकाव्याख्याने **तयोपक्षयाच्चेति**[106] सूत्रव्याख्याने प्रेमैव पुमर्थ इति, दुःखाभावरूपो मोक्ष पुमर्थो भवितुं नार्हतीति च तीर्थैः व्याख्यातम्। नैयायिकोक्तं **'तदत्यन्तविमोक्षोऽपवर्ग'**[107] इति दुःखाभावरूपं मोक्षस्वरूपं न साधीय इति तैः स्पष्टतयोक्तम्। सुखस्यैव पुमर्थौचित्यात् प्रेमरूपं सुखमेव पुरुषार्थ इति तैः कथितम्।

अत्रोदाहृतस्य सूत्रस्यायमर्थः – द्वाविंशतिप्रकारस्य दुःखस्य आत्यन्तिकी निवृत्तिरेव मोक्षः। आत्यन्तिकत्वञ्च स्वसमानाधिकरण दुःखप्रागभावानधिकरणत्वमिति न्यायसिद्धान्तः। मोक्षस्यास्य स्वरूपविवरणे च न्यायभाष्ये मोक्षे सुखं कथमपि न भवतीति दुःखाभावस्यैव सुखमिति केवलमौपचारिकप्रयोगो भवतीति सप्रपञ्चं प्रतिपादितम्। परन्तु भक्तिसंप्रदायानुसारं तीर्थैः मोक्षरूपविवरणे न्यायमतमिदं निराकृतम्।

भक्तिचन्द्रिकाव्याख्याने यद्यपि न्यायवैशेषिकप्रसङ्गाः प्रत्यक्षं नोद्धृतास्तथापि न्यायशास्त्रशैलीमनुसृत्यैव तत्र तत्र विषयविवेचनं कृतमिति सुधीभिर्विभावनीयम्।

संपूर्णे भक्तिचन्द्रिकाव्याख्याने नारायणतीर्थानां पूर्वमीमांसा शास्त्रवैदुष्यं प्रतिपदमिव बोभवीति। मीमांसाशास्त्र पारीणाः अमी विद्वांसः क्वचिदचिन्तितस्थलेऽपि पूर्वमीमांसा संदर्भं दर्शयित्वा विषयविवेचनं कुर्वन्ति।

भक्ते रसरूपत्वनिरूपणसमये विभावानां रसपुष्टिकरत्वेन स्वरूपनिर्वर्तकत्वात् अङ्गत्वं भवतु नाम, अनुभावादीनान्तु तत् कथं भवेदित्याशंक्य स्वरूपाऽनिर्वर्तकानाम् अनुभावादीनाम् अङ्गत्वं न भवतीति स्पष्टं कथयित्वा नारायणतीर्थैर्मीमांसासंदर्भैः स प्रसङ्गः समर्थितः। दर्शादौ यथा प्रयाजाः स्वरूपनिर्वर्तकत्वेन अङ्गत्वं भजन्ति न तथाऽनुयाजाः तथापि अनुयाजाः फलं प्रति योग्यतासम्पादकत्वेन उत्तराङ्गानि भवन्ति तद्वत् विभावादिवदङ्गत्वाभावेऽपि अभिव्यञ्जकत्वात् अनुभावादीनाम् उत्तराङ्गत्वस्वीकारे न कोऽपि विरोध इति तीर्थाः शास्त्रसामञ्जस्यं व्यवस्थापयामासुः।[108]

प्रयाजादि मीमांसोदाहरणन्तु साक्षादेव **'योगस्तूभयार्थमपेक्षणात् प्रयाजादिवत्'**[109] इत्यस्य सूत्रस्य रूपेण दत्तमस्ति महर्षिणा। तत्र **'गुणानाञ्च परार्थत्वात् असम्बन्धः समत्वात् स्यात्'** इति मीमांसान्यायो दर्शितः। तेन प्रधानाङ्गयोगस्य कथमङ्गाङ्गित्वमिति शङ्कित्वा यथा प्रयाजः वाजपेयादेः, तदङ्गदीक्षणीयादेश्च अङ्गमिति समाधानं ददुः नारायणतीर्थाः।

'**बुद्धिहेतुप्रवृत्तिराविशुद्धेः अवघातवत्**'[110] इति सूत्रे स्वयमेव साक्षादवघातस्योदाहरणं दत्तम्। तत्र तदुदाहरणविवरणे तीर्थैः यथा व्रीहीनवहन्ति इत्यत्र विहितव्रीह्यवघातस्य यावद्वैतुष्यं अनुष्ठानं शास्त्रार्थोः दृष्टोपकारकत्वात् तद्वदित्यर्थः इति दर्शितम्।

**भक्त्या भजनोपसंहाराद् गौण्या परायै तद्धेतुत्वात्**[111] इत्यस्य सूत्रस्य व्याख्याने 'भक्तिनाम्ना भजनादिकं सर्वं संगृह्यते तच्च परभक्त्यर्थं गौण्यावृत्त्या' इति सूत्रार्थमभिधाय 'चित्रयायजेत' इत्यत्र सामानाधिकरण्येन यथाऽर्थोगृहीतस्था अत्रापि भक्तिनामक भजनेनेष्टं भावयेदिति सूत्रार्थं व्याचख्युः नारायणतीर्थाः। अपि च सोमेन यजेतेत्यत्र सोमवता यागेनेष्टं भावयेदिति यथा वाक्यार्थे वर्ण्यते तथा भक्त्या इत्यत्रापि भक्तिमद्भिर्भजनादिभिरित्यपि वाक्यार्थो भवतीति नारायणतीर्थैः मीमांसाशास्त्रप्रमाणेन प्रदर्शितम्।

**नाम्नेतिजैमिनिः संभवात् इत्यत्र**[112] भगवन्नामकीर्तनेन फलाधिक्यं भवतीति जैमिनेराचार्यस्य मतं दर्शितम्। तद्व्याख्याने नारायणतीर्थैः 'परेतु' इत्यनेन केषाञ्चनमतं दर्शितम्। तदनुसारं भक्तिनाम्ना परभक्तिं भावयेत् इति जैमिनिमतमिति सूत्रार्थोभवति श्येनेनाभिचरन् यजेत इति तत्रोदाहरणं भवति। परं नारायणतीर्थमतानुसारं व्याख्यानमेतन्न साधीयः। प्रसङ्गेस्मिन् गुणविधिर्यः तैः स्वीकृतः सोऽत्र न भवति। वाजपेय इव अत्रापि विरुद्धत्रिकद्वयापत्तिर्भवति अतः वाजपेयशब्दः कर्मनामधेयमेव न गुणविधिरिति मीमांसा शास्त्रे सिद्धान्तितं तद् दर्शयित्वा सुविपुलं च चर्चित्वा नारायणतीर्थाः भक्तिशब्दस्य गुणविधित्वे विरूद्धत्रिकद्वयमापद्येत अतः भक्तिरिति कीर्तनादिभक्तिनामधेयमेवेति विशदीचक्रुः। '**स्वयमर्पितं ग्राह्यमविशेषात्**'[116]3इत्येतस्य सूत्रस्य व्याख्याने

पूजायां भगवते स्वयमर्पितं नैवेद्यं निर्माल्यादिकं स्वयमपि ग्राह्यमेव भगवद्–भागवतयोरविशेषादिति सूत्रार्थं कथयित्वा नारायणतीर्थाः मीमांसाप्रसङ्गे यथा यजमानपञ्चमाः पुरोडाशं भक्षयन्ति इत्यत्र प्रतिपत्तिपराणि वाक्यानि स्वीकृतानि तथाऽत्रापीति समर्थयामासुः।

**पत्रादेर्दानमन्यथा हि वैशिष्ट्यम्**[114] इत्यत्राऽपि आदौ पूजायां पत्रादेरपि दानं श्रूयते तत्किं पुष्पदानादिना तुल्यफलं न वेति संदेहे पुष्पादिदानस्यैव मुख्यता भवति यदा अशक्तिर्भवतीति वर्णितम्। अत्र केषाञ्चनमतं नारायणतीर्थैः पुरस्कृत्य तत् सुधीभिः परिशीलनीयमिति व्याख्यातम्। तेषां मते तावत् –

भगवदुद्देश्यकं सर्वदानं प्राप्तम्। तदेव भक्तेरङ्गविधिः। अन्यथा पत्रादिचतुष्टयविशिष्टविधानं स्यात्। प्रत्येकविधौ वाक्यभेदात्। अतः पत्रादिशब्देन प्राप्तं दानमनूद्य भक्त्यङ्गत्वविधिरेव युक्त इति दृश्यते। सूत्रस्वारस्ये व्याख्यानमेतत् परिशीलनीयमिति नारायणतीर्थाः वर्णयन्ति।

**भूयसामनष्ठितिरितिचेदाप्रायणमुपसंहारान्महत्स्वपि।**[115]सूत्रव्याख्यानेऽपि मीमांसकानां मतमनूद्य निराकृतं नारायणतीर्थैः। पुराणवाक्यानि केवलमर्थवादरूपाणिवेति शङ्कित्वा पुराणवाक्यानामर्थवादपरत्वेन व्याख्यातृणां महानरकपातो भवतीति वचनात् अर्थवादत्वं न वक्तव्यमिति केषाञ्चन मतमपि प्रस्तुत्य तादृशनरकपरकवाक्यानां अविरुद्धार्थे प्रामाण्याभावकथनपरत्वमिति नारायणतीर्थाः व्याचख्युः। अत्र मीमांसकास्तावत् एतानि पुराणवाक्यानि अर्थवादत्वात् अविवक्षितस्वार्थानीति कारणेन भजनीयदेवतास्तुतिमेव समाश्रयन्ति। नारायणतीर्थानां मते तावत् मीमांसकानां मतमिदं न युक्तं यतः अर्थवादस्य स्वरूपमेव अविमृश्य प्रवर्तितमिदं कल्पनं न

युक्तिसंगतमितिते वर्णयन्ति। एवं पौराणवाक्यानि विधिशेषाणि भवन्ति चेदपि नामसंकीर्तनपराणां तेषामर्थवादानां न कापिहानिरिति ते स्पष्टीकुर्वन्ति।

संकीर्तनं विधिर्वाङ्गं वेति विकल्पे यस्य पर्णमयी जुहूर्भवति इति वाक्यात् पर्णमयत्वं क्रत्वङ्गं यथा भवति तथा नामसंकीर्तनं उपासनाविधेरङ्गं क्रतुविधेर्वाऽङ्गं भवत्विति पूर्वपक्षः प्रस्तुतः। नारायणतीर्थास्तावदत्र अपूर्वत्वादेव व्यवस्थाविधिरस्मिन् वाक्ये न पर्णतान्याय इति सिद्धान्तं प्रतिपादयामासुः। अतः सर्वेषामेव नामकीर्तनादिपराणां वाक्यानां फलपरत्वमेवेति निष्कर्षस्तैर्दर्शितः।[116]

गुणनामकीर्तनादिषु क अधिकारीति विषयः भक्तिसूत्रग्रन्थे '**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्**'[117] इत्यनेन सूत्रेण चर्चितः। तत्र निन्दितचण्डालादियोनिपर्यन्तः सर्वोऽपि जन्तुः भक्तावधिक्रियते इति निर्णीतम्। तत्र चाण्डालादीनां कथं वा अधिकार इति विवेचनं नारायणतीर्थैः कृतम्। तेषां चाण्डालादीनां पुराणश्रवणाभावेन शूद्रस्यैवाध्ययनाभावेन वैदिकेषु कर्मसु पौराणिकेषु कीर्तनादिषु च न्यायेन अधिकारो नास्ति तथापि 'निषादस्थपतिं' न्यायेन निषादेष्टौ निषादस्येव कीर्तनादिषु अधिकारो भवतीति दर्शितम्। निषादश्च असौ स्थपतिश्च इति कर्मधारयमाश्रित्य निषादस्यापि वेदाध्ययनं विधाय स्थापत्यमङ्गीकृतं मीमांसाशास्त्रे, इति तीर्थैः सम्यग् ज्ञापितम्।

एवमेव '**क्रमैकगत्युपपत्तेस्तु**'[118] इत्यस्य सूत्रस्य व्याख्यानेऽपि महान् शास्त्रविचारः प्रस्तुतः। परिपक्वानुरागाणां भगवदभेदरूपा भगवत्प्राप्तिः, अपरिपक्वानुरागाणान्तु साधनभक्त्या तल्लोकप्राप्तिरिति निष्कर्षोऽपि

प्रदर्शितः। परन्तु अपरिपक्वानुरागाणां साधनभक्त्या भगवल्लोकप्राप्तिरित्येतत् असहमानः पूर्वपक्षी तत्त्वज्ञानद्वारैव साधनभक्तिः भगवल्लोक साधनं भवतीति स्वीकृत्य तत्त्वज्ञाने च वेदान्त विचारोऽपि हेतुरिति कारणेन साधनभक्तेः वेदान्तविचारस्य च वैकल्पिक हेतुत्वमेवेति मन्यते। परन्तुयत्र द्वारैक्यं भवति तत्रैव विकल्पः व्रीहिभिर्यजेत यवैर्यजेतेत्यत्रापि द्वारैक्यादेव विकल्प इति कारणेन साधनभक्ति–वेदान्तविचारयोश्च द्वारभेदकारणेन विकल्पो न भवतीति दर्शितम्। द्वारभेदहेतोरेव प्रयाजावघातयोर्न विकल्पो भवति। अत्र च सिद्धान्तं प्रतिपादयद्भिः नारायणतीर्थैः एकप्रयोगविधिपरिगृहीत–त्वाभावादेव साधनभक्ति– वेदान्तविचारयोः द्वारभेदेऽपि उदभिदादियागेषु विकल्पवत् विकल्पः संभवतीति स्वमतं प्रतिष्ठापितम्।

**मित्रोपदेशान्नेतिचेन्न स्वल्पत्वात्**[110] इत्यस्य सूत्रस्य व्याख्याने पापहेतुहिंसादिमिश्रितकर्मोपदेशात् कर्म न हितमिति चेन्न, तादृशहिंसाया स्वल्पत्वादिति सूत्रार्थः।'अग्नीषोमीयं पशुमालभेत' इति साक्षाद् वेदे हिंसा विहिता तर्हि कथं तत् अधर्मसाधनं भवेदिति शङ्काऽत्र भवति। एतत्समाधानरूपेण नारायणतीर्थाः 'मन्त्रार्थवादपुराणेभ्योऽनर्थसाधनत्वमेव तत्कर्मण इति स्वमतं प्रकटीचक्रुः। मन्त्रोऽपि पशुहिंसायाः पापजनकत्वं दर्शयति। अर्थवादः पुराणवाक्यानि च पशुहिंसां निन्दन्ति। एवं पशुहिंसा अनर्थकरी एव।

केषाञ्चन मतानुसारं मा हिंस्यादिति सामान्यहिंसानिषेधः क्रत्वङ्गभूतहिंसायां न प्रवर्तते। क्रत्वङ्गहिंसा सामान्यस्य अपवादः। एवं विशेषविधिः सामान्यनिषेध इति द्वयं स्वीकृत्य विरोधः परिहर्तव्यः। विषयेऽस्मिन् नारायणतीर्थाः एवं विवेचयन्ति यत् ज्योतिष्टोमेन यजेत

इति विधिः पुरुषस्य साङ्गं प्रधानमेव विदधाति। तत्र पशुहिंसा तस्य अङ्गमेव भवति। हिंसात्यागे अग्नीषोमीययागो न भवति तदभावे च ज्योतिष्टोमयाग एव न भवतीत्यतो 'न हिंस्यात्' इति निषेधशास्त्रं हिंसाविधायकविशेषशास्त्रेण न बाध्यत इति नारायणतीर्थाः शास्त्ररहस्यं प्रकटयामासुः। वैधहिंसा क्रतूपकारिणीति तद्घटितप्रधानस्य स्वर्गादिफलसाधनत्वमेवास्तीति हेतोः क्रत्वङ्गभूता हिंसा न निषेधविषयो भवतीति भक्तिचन्द्रिकाव्याख्याने नारायणतीर्थाः व्याचख्युः। परन्तु योगसिद्धान्तचन्द्रिकाव्याख्याने तावत् योगसिद्धान्तानुसारं हिंसा सर्वथा त्याज्यैवेति निश्चिक्युः।

एवं बहुषु स्थलेषु नारायणतीर्थाः मीमांसाशास्त्राधारेण शास्त्रचर्चां प्रवर्त्य भक्तिसिद्धान्तानां शास्त्रस्वरूपं प्रतिष्ठाप्य शास्त्रजिज्ञासूनां कृते महान्तमुपकारं चक्रुरिति कथने न काऽप्यतिशयोक्तिः एतादृशव्याख्यानाध्ययनेन मूलसूत्रस्वारस्येनसाकं शास्त्रान्तररहस्य–ज्ञानमपि बोभवीतीति वक्तुं शक्यम्।

स्वकीयकालस्य महान्तो विद्वांसः सर्वतन्त्रस्वतन्त्रा इमे नारायणतीर्थाः भक्तिचन्द्रिकाव्याख्याने बहूत्र ब्रह्मसूत्राणि प्रमाणत्वेन दर्शयामासुः। क्वचिद् वेदान्ते इतरसिद्धान्तानपि दर्शयित्वा शास्त्रचर्चामग्रे निन्युः। श्रीमद्रामानुजमतविवेचनमकार्षुः। संपूर्णस्य भक्तिचन्द्रिकाग्रन्थस्य अध्ययनेन एतज्ज्ञायते यत् नारायणतीर्थाः अद्वैते बद्धादरा इति। यथा अद्वैतसिद्धान्तविरोधो न भवेत्तथा तैः सूत्रव्याख्यानमुपस्थापितम्। तेषामयमद्वैतादरः भक्तिचन्द्रिकायां पदे पदे दृष्टिपथमायाति।

नारायणतीर्थानाम् अद्वैतमतादर इति शीर्षकेण विषयोऽयं अनन्तरितपूर्वाध्याये विपुलतया चर्चित इति कारणेन पुनरत्र न पृथक् प्रतन्यते।

नारायणतीर्थाः महान्तः संस्कृतभाषाविदः वैयाकरणसंप्रदायज्ञाश्च। अत एव संदर्भानुसारं तैः व्याकरणविषयकं विवेचनमपि भक्तिचन्द्रिका–व्याख्याने विहितम्।

**पृथुध्रुवप्रह्लादाऽम्बरीषशुकसनकनारदभजनाचाराच्च**[120]सूत्रगतस्य चकारस्य व्याख्याने नारायणतीर्थैः कथितं यत् भक्तेः प्राधान्यं पुराणादिभ्यः शिष्टाचारादपि ग्राह्यं तथैव चकारेण प्रमाणान्तर–समुच्चयो ज्ञेयः इति।

**न च क्लिष्टः परः स्यादनन्तरं विशेषात्**[121] सूत्रस्य व्याख्यानसंदर्भे च '**तत्त्वमेव त्वमेव तत्**' इति वाक्यं प्रस्तुत्य तत्र '**एव कारेणं** अयोग–अन्ययोगव्यवच्छेदनेन शुद्धाद्वैतमेव ज्ञापितमिति नारायणतीर्थाः कथयामासुः। एवकारस्त्रिधामत इति व्याकरणशास्त्रमनुसृत्य एभिरयमर्थो दर्शितः।

**द्वेषादयस्तु नैवम्**[122] इत्यस्य सूत्रस्य व्याख्याने च 'तु' कारस्यापि भावं विवृण्वद्भिः तुकारोऽसंभवज्ञापक इति कथितम्। तेन 'भक्तानां द्वेषादयोऽसम्भाविताः अतस्ते न भक्तिलिङ्गानि' इति व्याख्या कृता। अतो द्वेषदयो न भक्तिरूपा इति निष्कर्षः। एवमेव **तद्वाक्यशेषा–प्रादुर्भावेष्वपिसा।**[123] सूत्रव्याख्याने 'प्रादुर्भावेष्वपि' इत्यत्र विषयसप्तमी दर्शिता।

अन्यत्र तु स एव तुकारः नकारार्थ इति नारायणतीर्थैर्व्याख्यातमत्र विशेषतयाऽवधेयम्। तुकारः क्वचिदभावज्ञापकत्वेन स्वीकृतः क्वचिच्च

नकारार्थत्वेन। **ध्याननियमस्तु दृष्टसौकर्यात्**[124] इत्यस्य सूत्रस्य व्याख्याने नारायणतीर्थैः तुकारः नकारार्थत्वेन स्वीकृतः पुनश्च ध्याने ध्येयनियमो नास्तीति च सूत्रार्थो वर्णितः।

'भगवतः कीर्तनादिकस्य श्रवणं कीर्तनं वा साधुशब्देनैव कार्यं न भाषाप्रबन्धादिना' इति किञ्चिन्मतमुपन्यस्य नारायणतीर्थैर्महता विपुलमनसा तन्निराकृतम्। 'न म्लेच्छितवै नापभाषित वैलेच्छो वा एष यदपशब्द' इति महाभाष्यपस्पशाह्निके अपशब्दप्रयोगः निषिद्धस्तथापि भगवत्कीर्तनादेर्विहितत्वात् तत्र निषेधो न प्रवर्तते इति कथयित्वा नारायणतीर्थैः भाषयाऽपि गुणनामकीर्तनं कर्तव्यमिति हृदयोदारता दर्शिता। अत्र महाभाष्य वाक्यमुदाहृत्य चर्चा प्रस्तुता।

एवमस्य भक्तिचन्द्रिकाव्याख्यानस्य सम्यगध्ययनेन ज्ञायते यत् श्री नारायणतीर्थाः स्वकीयस्य अनितरसाधारणशास्त्रवैदुष्यस्य–कारणेन भक्तिचन्द्रिकाव्याख्यानस्य महत्त्वं वर्धयामासुः। एवञ्च भक्तिसिद्धान्तानामपि प्रमाणीकरणं तैर्लीलया कृतम्। अन्यैः व्याख्यातृभिरनावश्यकमिति नितरामुपेक्षितेष्वपि स्थलेषु महतीं चर्चां समुपस्थाप्य नारायणतीर्थाः शास्त्रगाम्भीर्यमेव अवतारमायासुरिति दृश्यते। सूत्रार्थमात्रकथनेन तृप्यतां व्याख्याकाराणां कृते भक्तिचन्द्रिकाव्याख्यानं नितरामादर्शमात्रं भवेदित्यत्र नास्ति संदेहः। व्याख्याता यदि शास्त्रपण्डितो भवति तर्हि शास्त्रगाम्भीर्यमेव आनयेत् परन्तु शास्त्रपण्डित्येनसाकं तस्य हृदयोदारता भवेत् तर्ह शास्त्रगाम्भीर्येण सह विषयलालित्यं प्रतिपादनकौशल्यं सह तिष्ठेताम् इति हि व्याख्यानस्यास्य अध्ययनेन व्यक्तं भवति।

———

## संदर्भाः


1. योे.सि.च. (2004). पृ. 6
2. ब्र.सू. 2—1—167
3. मैत्रा. श्रुतिः 4—5
4. यो.सि.च. (2004)पृ. 35, 40
5. ब्र.सू. 1—1—2
6. भ.च. पृ. 24
7. शा.भ.सू. 1—1—4
8. तत्रैव 1—1—5
9. श्वेता.उप. 3—8—6—15
10. शा.भ.सू. 1—2—1
11. तत्रैव 1—2—7
12. तत्रैव 1—2—16
13. भ.च. पृ. 78
14. शा.भ.सू. 2—1—7
15. बृह.उप. 2—4—14
16. तत्रैव 5—5—15 पृ. 326
17. ब्र.सू. 4—4—15
18. शा.भ.सू. 2—2—25
19. भ.च. पृ. 167
20. तत्रैव
21. शा.भ.सू. 2—1—7
22. तत्रैव 2—1—18

23. तत्रैव 2—1—19

24. तत्रैव 2—1—22

25. तत्रैव 2—1—28

26. तत्रैव 2—2—23

27. भ.च. पृ.153

28. शा.भ.सू. 2—2—25

29. भ.च. पृ. 167

30. शा.भ.सू. 2—2—29

31. भ.च. पृ. 185

32. तत्रैव पृ. 187

33. शा.भ.सू. 3—1—7

34. तत्रैव 3—1—8

35. तत्रैव 1—1—2

36. वि.पु. 1—20—17

37. श्री.भाग.— 7—4—36,38

38. तत्रैव— 12—7—128

39. तत्रैव— 2—2—21

40. शा.भ.सू. 2—2—21

41. तत्रैव 2—2—23

42. भ.च. पृ. 163

43. शा.भ.सू. 2—2—29

44. भ.च. पृ. 4,55,101,47

45. तत्रैवपृ. 113

46. तत्रैवपृ. 103

47. तत्रैवपृ. 62, 107

48. तत्रैवपृ. 113, 150

49. तत्रैवपृ. 151

50. तत्रैवपृ. 110

51. तत्रैव 140

52. तत्रैवपृ. 132

53. शा.भ.सू.1—1—5

54. ब्र.सू. 3—2—5

55. शा.भ.सू. 2—1—1

56. ब्र.सू. 4—1—1

57. तत्रैव 2—1—4

58. शा.भ.सू.2—1—5

59. ब्र.सू. 4—1—3

60. शा.भ.सू. 2—1—8

61. ब्र.सू. 3—3—11

62. शा.भ.सू. 2—1—23

63. ब्र.सू.

64. शा.भ.सू. 2—1—26

65. ब्र.सू. 1—1—20

66. शा.भ.सू. 2—2—10 भ.च.130

67. यो.सू. 1—39

68. ब्र.सू. 4—1—11

69. शा.भ.सू. 2—2—25

70. तत्रैव 2—2—26

71. ब्र.सू. 4—1—13,14

72. शा.भ.सू. 2—2—27

73. ब्र.सू. 3—4—42

74. शा.भ.सू. 2—2—28

75. ब्र.सू. 4—1—12

76. शा.भ.सू. 3—1—7

77. ब्र.सू. 3—2—37

78. शा.भ.सू. 3—1—8

79. ब्र.सू. 2—3—14

80. शा.भ.सू. 3—2—4

81. ब्र.सू. 2—3—30

82. तत्रैव 3—2—9

83. शा.भ.सू. 3—2—5

84. ब्र.सू. 4—1—13

85. भ.गी. 4—37

86. ब्र.सू. 4—1—19

87. शा.भ.सू. 1—1—3

88. यो.सू. 1—23,27,28,29

89. शा.भ.सू. 1—2—13

90. तत्रैव 1—2—12

91. तत्रैव 2—1—7

92. भ.च. पृ.

93. शा.भ.सू. 2—2—8

94. यो.सू. 2—3

95. तत्रैव 4

96. तत्रैव 12

97. तत्रैव 13

98. शा.भ.सू. 2—2—10

99. यो.सू. 1—39

100. शा.भ.सू. 2—2—23

101. यो.सू. 4—29

102. भ.च. पृ. 162

103. शा.भ.सू. 2—2—16

104. यो.सू. 4—7

105. शा.भ.सू. 3—1—6

106. तत्रैव 1—1—5

107. न्यायसूत्रम् 1—1—22

108. भ.च. पृ. 53—54

109. शा.भ.सू. 1—2—12

110. तत्रैव 2—1—1

111. तत्रैव 2—2—1

112. तत्रैव 2—2—6

113. तत्रैव 2—2—13

114. तत्रैव 2—2—15

115. तत्रैव 2—2—20

116. भ.च. पृ. 143—145

117. शा.भ.सू. 2—2—23

118. तत्रैव 2—2—25

षष्ठाध्यायः

# भक्तिचन्द्रिका– इतरव्याख्यानानि

## शाण्डिल्यभक्तिसूत्राणां व्याख्यानान्तराणि भक्तिचन्द्रिका च

शाण्डिल्यभक्तिसूत्राणां विवेचनपराः स्वप्नेश्वरभाष्यं, नारायणतीर्थभक्ति– चन्द्रिकाव्याख्यानम्, अभिनवभाष्यमिति त्रयो ग्रन्थाः प्रसिद्धाः। परस्परतुलनायां ग्रन्थत्रयेऽपि कानिचन वैलक्षण्यानि दृग्गोचरीभवन्ति। न केवलं सूत्राक्षरयोजनायामपि च विभिन्न प्रमाणबलेन सिद्धान्तप्रतिपादने च वैलक्षण्यं दृश्यत एव। एवं प्राचीनस्य भक्तिसूत्रग्रन्थस्य सारमवगमयितुं तत्तत्काले रचितस्य एकैकस्य व्याख्याग्रन्थस्य प्रयोजनं विलक्षणमेव भवति तत्रापि प्राचीनव्याख्यानानां परामर्शेण नवीनमार्गोद्घाटकानां व्याख्यानानां प्रयोजनन्तु ततोऽपि विलक्षणतरं भवत्येव। अपि च विभिन्नव्याख्यानानां तुलनायांकृतायां तस्मिन् तस्मिन् काले मूलग्रन्थेऽपि जातानां पाठभेदानां स्वरूपमपि बोद्धुं शक्यते। शाण्डिल्यभक्तिसूत्रव्याख्यानेषु स्वप्नेश्वरभाष्यं प्राचीनतमत्वेन परिगण्यत इति कथितप्रायमेव। ततः परं भक्तिचन्द्रिकाव्याख्यानं ततश्च परस्तात् अभिनवभाष्यम् इति क्रमेण एतेषां कालोल्लेखः कर्तुं शक्यः। एतेषु स्वप्नेश्वरभाष्यं संक्षिप्तं गभीरञ्च वर्तते। तत्तुलनायां भक्तिचन्द्रिकाव्याख्यानं विस्तृतं बहुविषयस्पर्शि च। अचिरादेव प्रकाशितम् अभिनवभाष्यं प्राचीनव्याख्यानानां सारं गृहीत्वापि नावीन्यमवतारयत् भक्तिसम्प्रदाये विशिष्टं स्थानं वहति।

### सूत्रम्–'अथातो भक्तिजिज्ञासा'[1]

त्रिभिः अपि भाष्यकारैः सूत्रपदानां विवरणं भिन्नमेव कृतमिति दृश्यते।

प्रथमं स्वप्नेश्वराचार्याणां मतं प्रदर्श्यते –

तेषामनुसारं सूत्रेऽस्मिन् विद्यमाने पदत्रये 'अथ' इत्यस्य अर्थः 'अधिकार' इति स्वीक्रियते, न तु आनन्तर्यमिति। आनन्तर्यार्थास्वीकरणे हेतुद्वयं कथयन्ति –

1) आनिन्द्ययोनिपर्यन्तं सर्वेषामेव भक्तौ अधिकारः भवतीत्यतः येषामध्ययने अधिकारः नास्ति तेषां कृते स्वाध्यायाध्ययनादनन्तरमिति वक्तुं न शक्यते,

2) मुमुक्षुमात्रस्य भक्तावधिकारे उक्ते सति शमादिसम्पत्त्यनन्तरमित्यपि वक्तुं दुष्करम्।

अतः आनन्तर्यम् इति वक्तुं कस्मादनन्तरं तद् न प्राप्यते इत्यतः 'अथ' इत्यस्य आनन्तर्यमिति अर्थः न स्वीक्रियते।

सूत्रस्थस्य 'अतः' इत्यस्य अर्थं स्पष्टीकुर्वन्ति स्वप्नेश्वराचार्याः, यद् भक्तिः परमेश्वरानुरक्तिरूपा अस्ति तस्याः धर्मवत् कृतिसाध्यत्वं न भवति ब्रह्मवद् ज्ञेयत्वमपि न भवति। सा तु पूर्वसुकृतैः उत्पद्यते तथापि तस्याः विषये न इयं भक्तिः निःश्रेयसार्था, नेयमुत्तमविषया इत्यादयः कुतर्काः भवन्ति, तैश्च तस्याः निवृत्तिरपि भवति। अतः एतेषां कुतर्काणां निरासाय तस्याः मीमांसा आवश्यकी एतदर्थं सूत्रे "अतः"इति शब्दः 'कुतर्कनिरासोऽपेक्षणीयः अतः तज्जिज्ञासा कर्तव्या' इत्यनेन अर्थेन प्रयुक्तः इति स्वप्नेश्वराचार्याणां मतम्।

एवं तेषामनुसारं सूत्रस्यास्यार्थः –

**यतः कुतर्कनिरासोऽपेक्षणीयः अतः तज्जिज्ञासाकर्तव्या**[2] इति दृश्यते।

नारायणतीर्थाः सूत्रस्य अस्यार्थं त्रिधा वदन्ति। सूत्रस्थस्य "अथ" इत्यस्य पदस्य तैः अर्थद्वयं स्वीकृतम्। तैः अथशब्दः स्वरूपेण मङ्गलमिति मत्वा तस्यार्थः आरम्भः, आनन्तर्यश्च इत्येवं द्विविधः स्वीकृतः द्विविधार्थस्वीकरणेन सूत्रस्य अर्थद्वैविध्यमपि तैः स्पष्टीकृतम्। प्रथमम् 'आरम्भ' इत्येतमर्थं स्पष्टीकुर्वन्ति – 'अथ' इत्यस्य यदा आरम्भार्थः गृह्यते तदा 'अतः' इत्यस्य, 'यतः' 'भक्तिः पुमर्थसाधिका' इति अर्थं स्वीकृत्य,'जिज्ञासा' पदस्य च 'लक्षणया निरूप्यते' इत्यर्थो भवतीति तेषां मतम्। एवं सूत्रार्थः ईदृशः भवेत् –

**अत्यन्तपुमर्थोपायत्वाद्भक्तिर्निरूप्यते'**[3] इति।

अथवा अथ शब्दस्य द्वितीयमर्थं स्वीकृत्य–'अथ' इत्यस्य यदा 'आनन्तर्यम्' इत्ययमर्थः स्वीक्रियते तदा 'अतः' इत्ययं शब्दः आनन्तर्यस्य निरूपकः भवति। कर्मणि साधनपारतन्त्र्यं, क्षयित्वमित्यादयः दोषाः भवन्ति, ब्रह्मविद्यायाः फलम् अविद्यानिवृत्तिरूपः मोक्षः अस्ति किन्तु तस्यां जीवब्रह्मणोः विचारः अस्ति। तस्मिन्विचारे **अंशत्रयम्अस्ति जीवात्मपरमात्मनोः भेदं सत्यमिति स्वीकरोति** तर्हि द्वैतप्रसङ्गउत्पद्यते, यदि तयोर्भेदः मिथ्या इति स्वीकरोति तर्हि प्रतियोग्युन्मज्जनप्रसङ्गः यदि तयोः अभेदः अस्तीति मन्यते तर्हि नित्यत्वेन स अभेदः न साध्यते अतः एवं विवेकेन विचार्य सुखपरिपूर्णायाः भक्तेः एव पुमर्थकोटिप्रविष्टतां विज्ञाय तद्गोचरज्ञाने इच्छा भवतीति अर्थः स्वीकृतः।

अत एव तन्निराकर्तुं भक्तिर्जिज्ञास्यते इति एवं द्वितीयः सूत्रार्थःनारायणतीर्थैः कृत इति भासते। अथवा "आनन्तर्यम्" इत्यस्य अपरया दृष्ट्याऽपि तैः अर्थः दर्शितः। कर्मज्ञाने सम्पादिते सत्यपि, भगवद्गुणगानपराणां चेतसः आनन्दमग्नतायाः, स्वमनसि

अनुपलब्धिमनुभूय भक्तौ विजातीयानन्दं विज्ञाय च तदर्थं जिज्ञासा भवतीति तृतीयार्थः। पुमर्थस्य स्वत एव इष्टत्वेन तत्प्राप्तुं जिज्ञासा अवश्यं भवेदिति नारायणतीर्थैः मतम्।

भक्तिविषयकमीमांसा इत्येतत् पदं विहाय "जिज्ञासा" इत्येतत्पदं सूत्रकारैः स्वीकृतम्, अत्रापि सूत्रकाराणां विशिष्टाशयं एवं प्रतिपादयन्ति नारायणतीर्थाः—भक्तिजिज्ञासा इति कथनेन भक्तेः पुमर्थता सूत्रकारैः सूचिता। तेषामनुसारं यथा वेदान्ते ब्रह्मगोचरज्ञानेच्छया ब्रह्मजिज्ञासा इत्युक्तं तथैव अत्र भक्तिगोचरज्ञानेच्छया भक्तिजिज्ञासा इत्युक्तम्।[4]

एवं सूत्रस्यास्यप्रतिपादने नारायणतीर्थानां चिन्तनम् भिन्नं दृश्यते। यत्र स्वप्नेश्वराचार्याः "आनन्तर्यम्" इत्ययमर्थः भवितुं न शक्यते इति उक्त्वा विरमन्ति तत्र नारायणतीर्थाः तमेव अर्थं प्रकारत्रयेण दृढं प्रतिपादयन्ति समर्थयन्ति च। सूत्रार्थस्पष्टीकरणे अपरभाष्याणां तुलनायां नारायणतीर्थानां भाष्यम् अतीव विवेचनपरं भाषा च सुबोधा अस्ति इति ज्ञायते।

भवदेवमिश्राणां मते 'अथ'शब्दो मङ्गलार्थकः आनन्तर्यार्थकः अपि अस्ति। तेषां मतमनुसृत्य यथा कृषीवलाः रससेकानन्तरमेव बीजं वपन्ति तथैव शुद्धान्तःकरणानां भक्त्यर्थिसमाजानन्तरं तदभिधानमुचितम्।[5]

'अत' इत्यस्यार्थः —'यतः भक्तिश्रवणाधिकारिणः समभ्युपेता अतः' इति ते विवृण्वन्ति। अतः भवदेवमिश्राणां मते सूत्रस्यास्यार्थः — 'यतस्तच्छ्रवणाधिकारिणां सामाजिकानां भक्तिजिज्ञासा अतस्तद्विचार आरभ्यत' इत्यस्ति।

अत्र 'अथ' शब्दस्य आनन्तर्यार्थः मिश्रैः स्वीकृतः, स्वप्नेश्वराचार्यैः तन्न स्वीकृतः तथापि मिश्राणां भाष्ये स्वप्नेश्वराचार्याणां मतम् उल्लिखितं समर्थितम् इव भासते।

सूत्रम् –**सा पराऽनुरक्तिरीश्वरे।**[6]

अस्य सूत्रस्यार्थः त्रयाणामपि भाष्यकाराणां मते समानमेव, किन्तु सूत्रविषयमनुसृत्य मूलविषयविवेचने नारायणतीर्थानाम् असाधारणं–निष्ठा प्रतिपिपादयिषा च प्रकटीभवति। स्वप्नेश्वराचार्यैः सूत्रस्यास्यभाष्ये विष्णुपुराणस्थमेकं '**या प्रीति––––हृदयान्मापसर्पतु**'[7] इति एनंश्लोकमुद्धृत्य अस्मिन् श्लोके प्रीतिपदेन सुखनियतराग एव लक्षितः इति सिद्धान्तितम्। तेषामनुसारम् अनुरक्तिः सविषयिणी भवति, विषयजन्या न। विषयजन्यप्रीतिरपि रागं विना न सम्भवतीति रागावश्यकत्वमेव इति पातञ्जलसूत्रमपि समर्थयति,'**सुखानुशयी रागः**'[8] इति। अस्मिन् विषये नैयायिकानां मतमुपस्थाप्य इत्थं दूषयन्त्याचार्याः–

1) नैयायिकानां मते आराध्यत्वेन ज्ञानं भक्तिः किन्तु स्वप्नेश्वराचार्याणामनुसारम् आराध्यत्वेन ज्ञानं भक्तिः न भवति, अपितु आराध्यविषयकरागरूपैव सा।

2) अनुरागादिसहिताराध्यत्वज्ञानं भक्तिः इति।

'**मच्चित्ता –––––– रमन्ति च**'।। अपि च –

'**तेषां सततयुक्तानां –––––मामुपयान्ति ते**'।।[9] इत्यादौ मद्गतप्राणा मच्चित्ता इत्युक्तेन भक्तिमतां भजनमुक्तम् न तु आराध्यत्वेन ज्ञानवताम्। सूत्रस्थस्य 'अनु' इत्येतस्य शब्दस्य तेषां दृष्ट्या –पश्चात् इति (भगवद्महिमादिज्ञानादनन्तरं जायमानमिति) अर्थः भवति। एवञ्च अनुरागादिसहितम् आराध्यत्वज्ञानं भक्तिः नास्ति

इति स्पष्टीकृत्य 'ज्ञानेन उत्पद्यमानः अनुराग एव भक्तिः', इति स्वप्नेश्वराचार्यैः विवृतम्। –'**जीवोपाध्यनवच्छिन्नचेतनविषयिणी अनुरक्तिरेव सा**'[10] इति स्वप्नेश्वराचार्यैः भक्तेर्लक्षणं दत्तम्।

नारायणतीर्थानामनुसारम् '**आराध्यविषयक अगौणरागवत्त्वमेव सा**'।[11] आराध्यविषयश्च जगदाराध्यपरमेश्वरः। सूत्रस्यानुशब्दस्य च पश्चाद् जायमानत्वमित्ययमेवार्थः। अतः तन्महिमादिज्ञानाद् पश्चाज्जायमानत्वाद् अनुरक्तिः इति उक्तम् इति तेषां मतम्। भगवद्गुणश्रवणादिना अनन्यविषयोत्कण्ठाह्लादविशेषादिजनकत्वेन तस्या अगौणत्वं लौकिकरागादाविव सुग्रहम् इति तैरुक्तम्। अमुमनन्यविषयोत्कण्ठा–ह्लादविशेषं प्रह्लादवचनैर्ज्ञापयन्त्याचार्याः

**या प्रीतिरविवेकानां विषयेष्वनपायिनी।**

**त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु।।**[12]

अत्र 'प्रीतिं' शब्दः सुखार्थमात्रमेव न प्रयुक्तः, सुखनियतरागार्थं प्रयुक्तः इति नारायणतीर्थैः मतम् (स्वप्नेश्वराचार्यैरपि मतम्।) तैः विषयेषु इत्यत्र विषयसप्तमी न स्वीकृता यतोहि विषयानुल्लङ्घ्य इति उक्तम् अतः सविषयत्वाभावः एव तत्र। यद्यपि भक्तिः सुखज्ञानरूपा तथापि तज्ज्ञानं सुखविषयत्वं भवति अतः विषयविषयकत्वासम्भवः एवम् अनुरक्तिप्रीतिभ्यां भक्तिः भिन्नैव –

**नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।**

**तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि।।**[13]

एवं विष्णुपुराणे प्रथममेवं प्रार्थ्य अनन्तरं

**सा प्रीतिरविवेकानां विषयेष्वनपायिनी।**

**त्वामनुस्मरतो सा मे हृदयान्मापसर्पतु।।**

इतिप्रार्थितम्, अत्र प्रथमं भक्तिरच्युतास्तु इति प्रार्थ्य उत्तरश्लोके सैव प्रीतिशब्देन उच्यते चेत् पुनरुक्त्यप्रसङ्गोत्पद्येत अतः प्रीतिः भक्तिः न भवति इत्येतत् पूर्वपक्षमतं दूषयितुंनारायणतीर्थाः समादधति यद् यदि भक्तिं विहाय प्रीतिः काचिद्भिन्ना भवेत् तर्हि तस्याः अपि भगवद्वाक्ये अनुभाषणेन अनुग्रहेण भक्त्यैव भवितव्यं –

**'भक्तिर्मयि तवास्त्येव भूयोऽप्येवं भविष्यति' इतिवत्**

**प्रीतिर्मयि तवास्त्येव भूयोऽप्येवं भविष्यति।**

**विषयेषु विरागोऽस्ति भूयोऽप्येवं भविष्यति।।**[14]इति वा।

परंन तथास्ति। अतः 'नाथयोनिसहस्रेषु' इत्यस्मिन् श्लोके उद्दिष्टायाः भक्तेः स्वरूपवर्णनं 'या प्रीतिरविवेकानाम्' इत्यस्मिन् श्लोके कृतमतः श्लोकद्वयस्य एकवाक्यत्वं भवति तेन च प्रीतिभक्त्योः अभेदः एव ज्ञाप्यते इत्युक्त्वा अस्य पुष्ट्यर्थं पञ्चरात्रेलिखितमुद्धरन्त्याचार्याः[15]इति।

एवञ्च 'प्रीतिरेव च रतिः परां काष्ठां गता प्रेमेत्युच्यते' इति प्रतिपादयन्त्याचार्याः। **'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः'**[16] इति भरतमुनीनां रससूत्रेण पराऽनुरक्तिः इति कोऽपि भावः अस्ति सैव भक्तिरूपेण सूत्रकारैः प्रोक्त इति स्वमतमपि प्रदर्शयन्ति ते ।[17]

एवं सूत्रकृतां मतं प्रस्तुत्य अग्रे भक्तिस्वरूपविषयं पुरस्कृत्य नारायणतीर्थैः भक्तिविषयकं स्वकीयं मतं वैशद्येन विवृतम् ।[18]

इत्येतद् भागवतकथनमुद्धृत्य, एतस्माच्छलोकात् मनसः या वृत्तिः प्रकटिता सा सुखरूपभगवत्प्रतिबिम्बयुक्ता, अत एव च भगवद्विषया सा सुखरूपा अस्ति इति नारायणतीर्थैः प्रतिपादितम्। तेषां मते वृत्तेः सुखरूपत्वात् भक्तिः रसरूपा अस्ति इति सिध्यति। भगवदाकारिता सा इच्छाहीनविषयतया फलमननुसन्धाय पुमर्थरूपा अस्ति इति नारायणतीर्थैः मतम्।

अत्र प्रथमं ईशप्रसादजं श्रवणेन उपासनया व्रतेन तपसाऽपिहीनाः केवलं भगवत्सङ्गात् भगवतः कृपाप्रसादात् भगवन्तमुपयाताः इतिवदन्ति [19]।

द्वितीयं भावजं स्पष्टयन्ति – 'तत्र भावो नाम भाव्यगुणश्रवणेन स्नेहाद्युद्दीपनद्वारा द्रुतस्य चित्तस्य धारावाहिकी भाव्याकारा वृत्तिः' इति। एवमुक्त्वा तस्य प्रकारद्वयं वर्णयन्ति"ईशतद्भक्तप्रसादजः साधनजश्चेति"। अनन्तरं ब्रह्मण्याविष्टचित्तानां चातुर्विध्यं सोदाहरणंविशदीकृत्य प्रेम्णः पञ्चदशविधत्वमपि स्पष्टीकृतम् [20]एवं प्रेम्णः प्रकाराः वैशद्येन विवृताः। तत्र गोपीनां श्रीकृष्ण–विषयकस्यप्रणयभावस्य विषये नारायणतीर्थाः, 'प्रणयो द्रवावस्था' इति भगवत्पादानां श्रीशङ्कराचार्याणां मतमुपस्थाप्य, द्रवावस्था प्रणयानुरागस्नेहशब्दैरपि सङ्कीर्त्यते इति स्वमतं पोषयन्ति।[21]

अस्यैव सूत्रस्य विवरणे नारायणतीर्थाः जीवाभिन्ने तस्मिन् परमात्मनि भक्तिः असम्भवा इत्येतं विषयमुपस्थाप्य स्नेहविशेषरूपा भक्तिः अद्वैतज्ञानस्य प्रतिबन्धिका भवितुं नार्हति अर्थात् अद्वैते स्वीक्रियमाणा भक्तिः स्नेहरूपा इति कारणेन अद्वैतेऽपि सा शक्येति समादधति। अस्मिन्नेव प्रसङ्गे प्रेमभक्तिसम्भवेऽपि सेव्यसेवकभावरूपा तु कथम्?सर्वमिथ्यात्वं जानतां कथमीशे भक्तिः

स्याद्?भक्तिसुखाद्वैराग्यासम्भवेन मुमुक्षुत्वासम्भवः, नीरूपत्वेन सौन्दर्याभावात् कथं भगवति भक्तिः सम्भवति?

इत्येतादृशप्रश्नानां समाधानमपि नारायणतीर्थैः कृतम्।[22]

एवञ्च अस्य सूत्रस्य व्याख्याने नारायणतीर्थानां भक्तिनिष्ठात्वं, भक्तिविषयक गभीरं चिन्तनम्, अद्वैतनिष्ठा च वैलक्षण्येन प्रतीयते। सूत्रार्थस्य स्पष्टीकरणे तेषाम् असाधारणवैदुष्यं चिन्तनशीलता च प्रकटीभवति। द्वाभ्यां भाष्याभ्यां भिन्नमर्थम् अकृत्वापि तद्विविषयप्रतिपादने एव वाचकानां मनसि उद्भविष्यन्तीः शङ्काः विचिन्त्य ताः समाधाय सूत्रार्थप्रतिपादने यत् असाधारणं कौशल्यं दर्शितं तेन नारायणतीर्थानाम् वैदुष्यमवगम्यते।

मिश्राणां व्याख्यानं स्वप्नेश्वराचार्याणां भाष्यस्य अर्थमेव अनुसरति इति भाति।

सूत्रम्–**तत्संस्थस्यामृतत्वोपदेशात्।।**[23]

स्वप्नेश्वराचार्याः अस्य सूत्रस्य व्याख्याने छान्दोग्योपनिषदः 'ब्रह्मसंस्थोऽमृतत्वमेतीति' मन्त्रमुदाहृत्य "भक्तिविषयकी निष्फलत्वगौणफलत्व– निबन्धना तदजिज्ञासा परिहृता भवति" इति वदन्ति, अर्थश्च – तस्मिन्नीश्वरे संस्था भक्तिर्यस्य स तथोक्तः, तस्यामृतत्वं फलमुपदिश्यते इति कुर्वन्ति।[24]

नारायणतीर्थानामनुसारं तत् पदं बुद्धिस्थप्रणवपरं। तस्मिन् प्रणवे ब्रह्मप्रतीके संस्था निष्ठा यस्य प्रणवजपतदर्थभावनपरस्य 'ब्रह्मसंस्थोऽमृतत्त्वमेति' इत्यनेनोक्ताऽभिप्रायेण मोक्षोपदेशः इत्यर्थो भवति। एतस्मात् नारायणतीर्थैः संस्था निष्ठा इत्येतौ पर्यायवाचकौ शब्दौ

इति प्रतिपादितम्। छान्दोग्योपनिषदिवर्णितत्रयाणां धर्मस्कन्धानां विवरणं कृत्वा ब्रह्मसंस्थावाक्यं नारायणतीर्थैः स्पष्टीकृतम्। तेषामनुसारं परिव्राज्यस्य ब्रह्मपरतया सर्वैषणापरित्यागः भवति अतः अन्यस्मिन् ईषणाऽसम्भवः तस्मात्सैव मोक्षमाप्नोति इत्यतः ब्रह्मसंस्थशब्दस्य परिव्राजकः इत्यस्मिन् अर्थे मानाभावात् रूढ्याभावाच्च यस्य कस्यचित् सत्कर्मशालिनः, ब्रह्मणि संस्था तस्यैव मोक्षप्राप्तिः इति सिध्यति। 'सोऽमृतत्त्वमेति' इत्यस्य च ब्रह्मणि संस्थाऽस्येति व्युत्पत्तिगम्यं ब्रह्मनिष्ठत्वं गम्यते इति नारायणतीर्थाः स्पष्टं प्रतिपादयन्ति। एवञ्च संस्थानिष्ठयोः एकत्वं तैः प्रतिपादितम्। तेषामनुसारं परानुरक्तिरेव स्वतः पुमर्थरूपेति अतः तस्याः मोक्षे उपयोगः न भवति किन्तु ज्ञानस्यैव उपयोगः तथापि अज्ञानरूपबन्धनाशे तत्त्वज्ञानसामग्र्यां गौणभक्तेरेव कारणत्वं लभ्यते अतः तत्संस्थस्येति पदं प्रयुक्तम्।

मिश्रैः अस्य सूत्रस्य विवरणे अतिश्रेष्ठफलवत्वाद् भक्तेः अज्ञाततत्त्वानां जिज्ञासा ज्ञाततत्त्वानां च विचारः संभवतीति उक्तम्।[25]

स्वप्नेश्वराचार्याणांमिश्राणाञ्च भाष्ये सूत्रार्थः स्पष्टीभवति किन्तु नारायणतीर्थैः सूत्रार्थप्रतिपादनेन सह संस्थानिष्ठयोः समत्वं प्रतिपाद्य सूत्रे प्रयुक्तसंस्थशब्दः परानुरक्तिपरक एव इति ज्ञापनेन संस्थाभक्तिरेव इति अग्रिमसूत्रस्याशयेन सह वर्तमानसूत्रार्थः उपानीतः अतः सूत्रार्थस्पष्टीकृत्य अग्रिमसूत्रेणसह अन्वये तेषां वैदुष्यं दरीदृश्यते।

सूत्रम्–**अत एव च फलाऽऽनन्त्यम्।।**[26]

अस्य सूत्रस्य व्याख्याने स्वप्नेश्वराचार्याः भक्तिः क्रियात्मिका नास्ति इति कारणेन तस्याः फलस्य निःश्रेयसस्य आनन्त्यम् भवति इति स्पष्टयन्ति।[27]

नारायणतीर्थाः भक्तेः क्रियात्मकत्वं ज्ञानात्मकत्वञ्च निषेधन्ति। तेषामनुसारं भक्तिः ज्ञानहेतुः अस्ति अतः ज्ञानात्मिका भवितुं न शक्यते। ज्ञानेन उत्पद्यमानायाः तस्याः असङ्ख्येयानि फलानि भवन्ति विषयेऽस्मिन् स्मृतिमुद्धृत्य[28] नारायणतीर्थाः भक्तेरसङ्ख्यफलानि भवन्तीत्यस्य हेतुं कथयन्ति – यदि भक्तिः क्रियात्मिका भवति तर्हि तस्याः स्वर्गादिमात्रफलकत्वं भवेत्, यदि ज्ञानरूपा भवति तर्हि मोक्षमात्रफलकत्वं भवेत् सर्वफलावाप्तिः तु न भवेत्। किन्तु भक्तेः सर्वफलकत्वं भवतीति उपर्युक्तया स्मृत्या भगवद्वचनादेव स्पष्टं भवति अतः क्रियाज्ञानयोश्च भिन्नैव भवति सा इति स्पष्टं भवति।

भक्तेः फलानां विषये अनन्तत्वं स्वप्नेश्वराचार्याः प्रतिपादयन्ति असङ्ख्येयत्वं नारायणतीर्थाः स्मृत्याधारेण स्पष्टीकुर्वन्ति।

भवदेवमिश्राणां मतमनुसृत्य भक्तिः क्रियात्मिका नास्ति अत एव तस्याः फलस्य मुक्तेरनन्तत्वं भवति। तेषां भाष्ये स्पष्टमुल्लेखः प्राप्यते, 'अत एव मुक्तेरनन्तत्वम्' इति मिश्राणाम्।[29] 'अत एव फलाऽनन्त्यम् इति स्वप्नेश्वराचार्यपाठः' इत्येवं कृते मिश्राणां भाष्ये स्वप्नेश्वराचार्याणां प्रभावोऽस्तीति दृश्यते।

सूत्रम्–**भक्त्या जानातीति चेन्न अभिज्ञया साहाय्यात्**।।[30]

स्वप्नेश्वराचार्याणामनुसारम् अभिज्ञा पूर्वज्ञातज्ञानमुच्यते। भक्त्युपकारिपूर्वज्ञानं तत्फलरूपभक्तिप्रवर्तकं भवतीति तैर्मतम्। भक्तिदार्ढ्यार्थं भक्त्यैवाभिज्ञप्तिभावेनातपेक्ष्य इति स्वमतं स्पष्टीकर्तुं ते अवघातवदित्येतद् हेतुं कथयन्ति। यथा व्रीहीणाम् अवहनेन अवघातः भवति तथैव भक्त्यनुष्ठानेन भक्तिःदृढा भवति इति तदर्थः।[31]

नारायणतीर्थाः 'अभिज्ञया सहाय्यात्' इत्यस्याशयं अनुरागस्फूर्तिपूर्वकस्फूर्तिद्वारा परभक्त्युपकाराद् इति स्वीकुर्वन्ति। अस्य सूत्रस्य व्याख्याने ते भक्तिभेदौ वर्णयन्ति भगवद्वाक्यमुद्धृत्य स्पष्टीकुर्वन्ति च – 'भक्त्या सञ्जातयाभक्त्या बिभ्रत्युत्पुलकां तनुम्' इति।अस्मिन् वाक्ये यो भक्तेः साध्यसाधनभावो दृश्यते स साक्षान्नास्ति किन्तु भगवदनुरागरूपसाधनभक्त्या यद् भगवज्ज्ञानं भवति तेन ज्ञानेन भगवदनुरक्तिर्भवति तया च परमप्रेम। एवम् एतादृशक्रमेण साधनभक्तिर्ज्ञानस्याङ्गं ज्ञानञ्च भक्तेरङ्गमित्येव नारायणतीर्थैः स्वमतमुपस्थापितम्। मिश्राणां भाष्ये सूत्रस्यास्यार्थः सरलतया स्पष्टीकृतः। 'भक्त्या मामभिजानाति' इत्येतद् भगवद्वाक्यं भक्तिनजननीत्येवमर्थं निर्दिशति तथा च दृष्टोपकार सामर्थ्यस्वरूपेण लिङ्गेन ज्ञानस्य भक्तिजनकत्वं प्रतीयते। द्वितीयासमभिव्याहृत शब्दात्मिकयाच श्रुत्या भक्तेर्ज्ञानजनकत्वं प्रतीयते। मीमांसान्यायमनुसृत्य लिङ्गापेक्षया श्रुतिर्बलवती। अतो भक्तिर्ज्ञानजननीति सिध्यते। इत्येवमभिज्ञा प्रत्यभिज्ञावद् ज्ञानविषयकं ज्ञानान्तरमस्ति। ज्ञानेन प्रथमतो भक्तिर्जायते भक्त्या विलक्षणं ज्ञानान्तरं तेन च भक्त्यन्तरम् इत्येवं बीजाङ्कुरन्यायेनानवच्छिन्नपरम्पराकः ज्ञानभक्तिसमुदायः यावद् दृढाभक्तिराविर्भवति तावदुत्पद्यते।[32]

भवदेवमिश्राणां मते अभिज्ञायाः आशयः प्रत्यभिज्ञावद् ज्ञानविषयकं ज्ञानान्तरम्। तस्मात् तेषाम् अभिप्राये ज्ञानेन प्रथमतो भक्तिर्जायते भक्त्या च पुनः सर्वतो भावेन विलक्षणं ज्ञानान्तरम् तेन च भक्त्यन्तरम्। तेन पुन ज्ञानान्तरमिति बीजाङ्कुरन्यायेन अनवच्छिन्नपरम्पराकः ज्ञानभक्तिसमुदाय स्तावदुत्पुद्यते यावदतिदृढाभक्तिराविर्भवति। यदा

अतिदृढाभक्तिराविर्भवति तदा सद्य एव सा परमात्मलयात्मिकां जीवन्मुक्तिं प्रयोजयति ।[33]

अस्य सूत्रस्य भाष्ये सूत्रकारमतमेव अनुवदन्ति स्वप्नेश्वराचार्याः मिश्राश्च ।नारायणतीर्थाः सूत्रकारमतं सकारणं स्पष्टीकुर्वन्ति ।

**सूत्रम्– एतेन विकल्पोऽपि प्रत्युक्तः ।[34]**

अस्य सूत्रस्य व्याख्याने स्वप्नेश्वराचार्याः ज्ञानभक्त्योः विकल्पः समुच्चयश्चापि सूत्रकृद्भिः निराकृतः[35] इत्युक्त्वा विरताः किन्तु नारायणतीर्थैः अस्मिन् सन्दर्भे सूत्रकृतां विकल्पानादरणं सकारणं स्पष्टीकृतम् । तेषामनुसारं ज्ञानभक्त्योः विकल्पः यद्यपि उचितः तथापि सूत्रकृद्भिः स अनादृतः यतोहि विकल्पाङ्गीकारे अष्टविधदोषाः आपतेयुः ।

नारायणतीर्थानामनुसारं मोक्षार्थं ज्ञानकारणताबोधकवाक्येषु भक्तिकारणता– बोधकवाक्येषु च सत्सु तयोः विकल्पस्य आवश्यकता न भवति, अङ्गागिभावेनापि तयोः मोक्षसाधनत्वं सिध्यति । यदा ज्ञानेन अनुरागः भवति तदा ज्ञानभक्त्योः एकाधिकारिकत्वेन तयोः अङ्गाङ्गिभावः सम्भवति । अतः सूत्रकारैः भक्तेः मोक्षसाधनत्वम् अङ्गीकृत्य ज्ञानस्य अनावश्यकता एव सिद्धान्तिता ।[36]

मिश्राणां भाष्यं स्वप्नेश्वराचार्याणां भाष्येन सह साम्यं भजते ।

एवं नारायणतीर्थाःनां भाष्यं सूत्रार्थ–स्पष्टीकरणे भाष्यद्वयस्यापेक्षया वैलक्षण्यं भजते इति सिध्यति ।

**सूत्रम्–देवभक्तिरितरस्मिन् साहचर्यात् ।।[37]**

अस्य सूत्रस्यविवरणे स्वप्नेश्वराचार्याः श्वेताश्वेतरोपनिषदः मन्त्रमुद्धरन्ति[38]

'यथा देवे तथा गुरौ' इति कथनेन देवभक्तिः ईश्वरेतरस्मिन् देवे मन्तव्या इति अर्थं वदन्ति तथा तस्य गुरूभक्तिसाहचर्यादिति कारणं कथयन्ति। तेषामनुसारं साहचर्यं अमृतफलायां भक्तौ न घटते, इन्द्रादिदेवतानामाराधनेन ताः शुभवज्ज्ञानफलाय भवन्ति साहचर्यं ईश्वरेतरस्मिन् देवेषुपार्षददेवेषु वा भवति।

नारायणतीर्थाः अस्य सूत्रस्य विवरणे भगवद्वाक्यमुदाहरन्ति –'**देवा देवयजो यान्ति मद्भक्ता यान्ति मामपि**'[39] इति। अर्थश्च ये देवान् यजन्ति ते तान् देवान् प्राप्नुवन्ति, ये च मम भक्ताः ते मां प्राप्नुवन्ति इत्येतस्मात् इतरदेवानाम् ईश्वरभक्तिसहपाठः अत्र दृश्यते, अन्यथा पुनरुक्तिदोषः आपतेदिति नारायणतीर्थानां मतम्।

एवम् देवभक्तिरितरस्मिन् साहचर्यात् इत्यस्य अर्थः परमेश्वरभिन्नेषु पार्षददेवेषु भक्तिः शुभफला भवतीति। अस्य सूत्रस्य भिन्नप्रकारेण भाष्यं कुर्वतां स्वप्नेश्वराचार्याणां खण्डनमस्मिन् सूत्रविवरणे नारायणतीर्थैः कृतमिति दृश्यते। नारायणतीर्थाः वदन्ति यैः 'यस्य देवे परा भक्तिः' इत्यनेन मन्त्रेण सूत्रार्थः गुरुभक्तिसाहचर्यमिति कृतः तद् व्याख्यानं रमणीयम्।

मिश्राणां भाष्ये पाठभेदो दृश्यते। देवे भक्तिरितरसाहचर्यात् इत्येवम्। तेषामनुसारं तत्साहचर्यं देवतान्तरभक्तेरेव भवति नत्वीश्वरभक्तेः।[40]

**सूत्रम्– प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः।।** [41]

स्वप्नेश्वराचार्याणामनुसारं प्रश्ननिरूपणं स्पष्टीकर्तुं कृत्स्नोऽपि द्वादशाध्यायः उदाहर्तुं शक्यते। एवं कृत्वा प्रश्ननिरूपणाभ्यामपेक्षया भक्तेरेवाधिक्यं प्राधान्यं वा सिध्यति अर्थवादो नास्तियतो हि प्रश्ननिरूपणस्य निर्णयं कर्तुं भवति न हि स्तुत्यर्थम्। अतः भगवद्गीतायाः द्वादशाध्याये वर्णित–प्रश्ननिरूपणाभ्यां केवलाङ्गानुष्ठाने अर्थात् केवलज्ञानानुष्ठाने क्लेशाधिक्यमेवास्ति अतः तस्मात् भक्तेरेव प्राधान्यं सिध्यति।[42]

अस्मिन्विषये स्वप्नेश्वराचार्यैः यत् केवलाङ्गानुष्ठाने क्लेशाधिक्यमेवास्ति इति कथितं तस्य नारायणतीर्थाः खण्डनं कुर्वन्ति। तेषामनुसारं[43] यद् भगवति अव्यक्तासक्तचेतसां क्लेशः निर्गुणोपासनायाः वा दुःसाध्यत्वम् उक्तं तदेव द्रष्टव्यं – आदौ निर्गुणोपासना तया निर्गुणसाक्षात्कारः तेन अनुरागः तस्माच्चमोक्षः इत्येवं क्लेशकरः मार्गः अस्यापेक्षया सगुणोपासना सुसाध्या भवतीति कथने क्रममुक्तिहेतोः आधिक्यकथनमित्येवाभिप्रायः।

ज्ञानमार्गोपासकाः अद्वैतनिष्ठावन्तः नारायणतीर्थाः निर्गुणोपासनाया क्लेशाधिक्ये सति क्रममुक्तिरेव भगवता कथितेति वदन्ति, एतस्माच्च तेषामद्वैतनिष्ठा एव प्रकटीभवति।

सूत्रस्यास्यार्थः क्रममुक्तिहेतुप्रकटनमिति यदि न गृह्यते तर्हि निर्विशेषब्रह्मबोधमार्गस्य मुख्यत्वं सिध्येत् इति नारायणतीर्थाःप्रतिपादयन्ति तदर्थञ्च भगवद्वाक्यमुदाहरन्ति[44] ।

मिश्राणां मतमनुसृत्य गीतायाम् अर्जुनेन पूजादिलक्षण–प्रीतिलक्षणयोर्भगवद्भजनयोः विषये आधिक्येन श्रेयस्करंकिमिति पृष्टे सति भगवता प्रीतिलक्षणस्य भगवद्भजनस्य

श्रेष्ठत्वं निरूपितमिति एतस्मात् प्रश्नोत्तराभ्यां भक्तेः आधिक्यसिद्धिर्भवति।[45] एवञ्च अस्यसूत्रस्य व्याख्यानेऽपि मिश्राणां भाष्यं स्वप्नेश्वराचार्याणां भाष्येण सह साम्यं भजति।

नारायणतीर्थाःनां व्याख्याने भक्तेराधिक्यसिद्धिः भवत्येवेत्युक्तम् अपि च सुसाध्यसगुणोपासनस्य क्रममुक्ति–हेतोराधिक्यमपि कथ्यते। एवं नारायणतीर्थानां भाष्ये सूत्रार्थः अतितरां स्पष्टीभवति।

सूत्रम्–**ब्रह्मकाण्डन्तु भक्तौ तस्यानुज्ञानाय सामान्यात्।**[46]

स्वप्नेश्वराचार्याणामनुसारं वेदे ज्ञानकाण्डं भक्त्यर्थमेवास्ति ज्ञानार्थं न। तेषां मते अज्ञातार्थज्ञापकत्वं यथा ज्ञानकाण्डे तथैव ब्रह्मकाण्डेऽपि अस्ति उभयत्रापि समानमेव इति। अतः धर्मज्ञापनार्थं पूर्वकाण्डे प्रकटितं सर्वमपि ज्ञानकाण्डमेव भवेत् परन्तु ज्ञाने विधिर्न सम्भवति इति कारणेन ब्रह्मकाण्डमित्येव सत्यं ज्ञानकाण्डन्तु भ्रम एव। अत एव 'अथातो ब्रह्मजिज्ञासा' इत्यपि भक्तिकाण्डमेवेति तैः मतम्।[47]

परन्तु नारायणतीर्थेभ्यः मतमिदं न रोचते। यतः ज्ञानकाण्डस्य ब्रह्मकाण्डस्य च प्रयोजनं भिन्नमिति भाव्यते चेदेव द्वयोर्विरोधः वस्तुतस्तु भक्त्यर्थत्वस्य ज्ञानार्थत्वस्य च न कोऽपि विरोधः। प्रधानस्याङ्गं वा अङ्गस्याङ्गं वा एकमेव भवितुमर्हति इति प्रयाजादिदृष्टान्तेन पूर्वमेव उपपादितम् अतः विरोधाभावेन ब्रह्मकाण्डमपि भक्तिनिमित्तमेव इत्येव श्रेयस्करं व्याख्यानम् इति नारायणतीर्थाः स्वमतनिष्कर्षं स्पष्टयन्ति।

तेषां मते ज्ञानयोगयोर्भक्तेरङ्गत्वं निरूप्य सूत्रकाराः ब्रह्मकाण्डस्यापि भक्तिनिमित्तत्त्वं प्रतिपादयितुं सूत्रमेतद् विरचयामासुः। वेदान्तभागे ब्रह्मकाण्डनामके श्रवणादीनि ब्रह्मोपायत्वेन कथितानि। तेषां साक्षात्

ब्रह्मोपायत्वम् उत भक्तिद्वारेति संशये प्रकृतसूत्रेण सूत्रकाराः श्रवणाद्यर्थकस्य वेदान्तभागस्यापि भक्तिनिमित्तत्वमेवेति दर्शयन्ति।

ब्रह्मकाण्डनामकः वेदान्तभागः भक्तिनिमित्तमेव यतः स भागो भक्तिनिमित्तं साक्षात्कारार्थं दर्शितो यतोहि ज्ञानभक्ती च अङ्गाङ्गिभावो भजतस्तयोरेकप्रयोजनत्वं विद्यते इत्यतः ब्रह्मकाण्डमपि भक्तिनिमित्तम् इति सूत्रकाराणामाशयः।[48]

एतदेव विवृण्वन्तः नारायणतीर्थाः 'आत्मा वारे———' इत्यादीनि वाक्यानि ज्ञानोद्देशेन श्रवणादिकं विदधति तत्तु भक्त्यर्थमेवातो न कोऽपि विरोधो भवितुमर्हति। एवं ब्रह्मकाण्डगतश्रवणादिद्वारा ब्रह्मणि परांकाष्ठां प्रापयितुमेव वेदान्तप्रवृत्तिरिति नारायणतीर्थानामाशयः।

मिश्राणां मते ज्ञानकाण्डमुपासनाकाण्डंकर्मकाण्डं वा सर्वेऽपि ब्रह्मकाण्डात्मकं भवितुमर्हन्ति यतोहि सर्वेषां वेदादिवाक्यानां ब्रह्मण्येव यज्ञादौ हविराद्युद्देश्यतयोपासनायामुपास्यतया ज्ञाने विषयतया च तात्पर्यविषयत्वम्। प्रधानभूतायां भक्तौ तस्य अनुज्ञानाय अङ्गत्वेन ज्ञापनाय पृथगभिधानं भवति। अस्मिन् वचने पूर्वक्षमुपस्थाप्य भक्तिप्राधान्यं समर्थयन्ति – भक्तिः प्रधानं ज्ञानकर्मणी च अङ्गे इत्यत्र किं विनिगमकं इति आशङ्कायां 'सामर्थ्यात्' इत्यनेन हेतुना समादधति चतुर्विधायामपि मुक्तौ भक्तावेव परमात्मनि जीवात्मलयस्वरूपत्वं स्वस्वरूपेणावस्थितिरूपत्वञ्च जनयितुं सामर्थ्यमस्ति अतः सैव प्रधाना इतरे यथा सम्भवम् अन्तःकरणशुद्धिप्रेमास्पददर्शनादिद्वारा अङ्गमिति स्पष्टम् इति प्रतिपादयन्ति।[49]

सूत्रस्यास्य अवबोधनेपदानां समाकलने च नारायणतीर्थानां भाष्यं महत्त्वपूर्णं भासते।

**सूत्रम्–तदङ्गानाञ्च।।**[50]

सूत्रे वर्णितस्य 'अङ्गानाम्' इत्येतस्य स्वप्नेश्वराचार्याः गुरुगमनं, वेदाविरोधितवर्णानुसन्धानं, शमाद्यनुष्ठानमित्येतान् अर्थान् स्वीकुर्वन्ति। तेषामनुसारम् अङ्गविकलान्यङ्गानि प्रधानोपकाराय न भवन्ति। यथा सैन्यदीनः सैन्यसेनापतिविहीनश्च पुरुषः राज्ञः उपकाराय न भवति तथैव।[51]

नारायणतीर्थानामनुसारं परमात्मरतिः स्वतः एव भवति तदर्थं साधनान्तरस्य अपेक्षा न भवति तथापि अप्रामाण्यशङ्का–निरासाय श्रवणस्य, असम्भावनानिरासाय मननस्य, विपरीतभावनानिरासाय निदिध्यासनस्य, विषयवासनानिरासाय च शमदमादीनाम् अभ्यासः करणीयः। एतमर्थं प्रमाणयितुं श्रुतिमुद्धरन्ति आचार्याः नारायणतीर्थाः– 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' इति। एवञ्च ज्ञानाद्यङ्गानाम् असकृदावृत्तिः करणीया इति नारायणतीर्थैः मतम्।[52]

मिश्राणां भाष्यं स्वप्नेश्वराचार्याणां भाष्यसममेवास्ति।

एवमस्य सूत्रस्य व्याख्याने नारायणतीर्थानां व्याख्यानं भाष्यद्वयस्य अपेक्षया वैषम्यं भजते।

**सूत्रम्– तामैश्वर्यपदां काश्यपः परत्वात्।।**[53]

स्वप्नेश्वराचार्याणामनुसारं बुद्धिं परमेश्वरैश्वर्यादिमद्विषयिणीं निःश्रेयसफलां काश्यपाचार्यो मन्यते। जीवात्माभ्यः परत्वात् अर्थात् तैः स्वज्ञानाय परज्ञानस्यापेक्षितत्त्वात्। अदृष्टविशेषजनकपरज्ञानं विना विरोधिविषयकत्वेन भ्रमनिवर्तकस्य स्वज्ञानस्यासम्भवात् तां

परमैश्वर्यादिमद्विषयिणीं ब्रह्मप्रतिपत्तिं निःश्रेयसफलां काश्यपाचार्याः मन्यन्ते इति स्वप्नेश्वराचार्यैः प्रतिपादितम्।[54]

नारायणतीर्थाः स्वप्नेश्वराचार्याणामस्य विवरणस्य खण्डनं कुर्वन्तः – यदि काश्यपाचार्याः जीवब्रह्मणोरत्यन्तं भेदम् अमन्यन्त तर्हि तत् तत्त्वमसीत्यनेन वाक्येन अवगम्यमानस्य 'अहं ब्रह्मास्मि' इत्यादि वाक्यस्यविरोधे अभविष्यत्। अतः भजनीयात् कश्चन अहम् अतिरिक्तः नास्मि इत्याकारिका अभेदप्रज्ञा अभ्यसनीया इति काश्यपाचार्याणां मतमस्ति इति नारायणतीर्थाः प्रतिपादयन्ति।[55]

मिश्राणां मते काश्यपाचार्याणांमतम् अप्रतिहतेच्छत्वनित्य–ज्ञानेच्छाकृतिमत्वाष्टविधैश्वर्यादि प्रकारिकेश्वरविशेष्यिका बुद्धि–र्भक्तेरङ्गम्। सैव बुद्धिः भक्तिमुपकरोति मुक्तिमपि प्रयोजयतीति। तेषामनुसारं काश्यपमते ईश्वरः जीवात्मभ्योऽत्यन्तं भिन्नः भवति। ईश्वरभक्तिश्च जीवानां तत्तद्गुणप्रकारकज्ञानादेव भवति। यथा स्त्रीणां पुरुषे, सेवकानां च प्रभौ। एतच्च नैयायिकवैशेषिकादिरीत्या जीवेश्वरयोः असर्वज्ञत्व–परतन्त्रेच्छत्व–स्वतन्त्रेच्छत्वादिभिः वैधर्म्यैरत्यन्तं भेदइत्यभिप्रेत्य एव भवति इति तैः मतम्।[56]

नारायणतीर्थानां व्याख्याने सूत्रार्थः अतितरां स्पष्टीभवति।

**सूत्रम्–भक्त्या भजनोपसंहाराद्गौण्या परायै तद्धेतुत्वात्।।**[57]

स्वप्नेश्वराचार्या '**एकभक्तिर्विशिष्यते**'[58] इत्यत्र भगवद्भक्तौ भक्तिशब्दस्य प्रयुक्तत्वेन संज्ञाप्राप्त्या भक्तिर्भजनयोरेकार्थत्वं मन्यन्ते। तेषामनुसारमस्मिन् सूत्रे परभक्तिः फलभावनया न विधीयते। अत्र हेतुद्वयं वदन्ति–भक्तिः कृतिसाध्या नास्ति अतस्तस्यां विधेयत्वं न भवति अपरञ्च तस्याः निःश्रेयसहेतुत्वम् अज्ञातं नास्ति, भगवद्गीतायां

भगवतैवोक्तम् –'**मद्भक्ता यान्ति मामपि**'[59] इत्यतो भगवद्प्राप्तिरूपफलं सर्वविदितमेव तस्मात् फलभावनया न सा विहिता। तेषामनुसारं परभक्तेर्विघ्ननाशन–साधनाकाङ्क्षया कीर्तनादिकमेवोपक्रान्तं भक्तिशब्देन। सूत्रे 'गौण्यां' इत्यनेन तृतीयान्तनिर्देशेन तासु गौणभक्तिषु परभजनसाधनत्वं विधीयते अपि च एतदेव सम्यग् ज्ञापयितुं भगवतः '**मयि ते तेषु चाप्यहम्**'[60] इत्यर्थवादवाक्यं तैरुद्धृतम्। तेषां मते –'**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।**'[61]

इत्युक्त्वा तत्पश्चाद् '**ये भजन्ति तु मां भक्त्या मयि ते तेषुचाप्यहम्**'[62] इत्यनेन कथनेन उपसंहारः कृतः। तैर्भक्तिशब्दः गौणार्थेनैव गृह्यत इति स्पष्टयितुं चत्वारिप्रमाणानि दत्तानि–[1] आयुर्वै घृतम्,[2] उद्भिद्वत् इत्यत्र भज्यते एभिरिति व्युत्पत्त्या,[3] 'चतुर्विधा भजन्ते माम्' इति भजनगणपाठात् सृष्टिवत्,[4] 'उदाराः सर्व एवैते' इत्यौदार्यगुणयोगाद्वा गौणत्वमस्तीति मतम्।[63]

नारायणतीर्थेभ्यः मतमिदं नारोचत। तेषामनुसारं 'परायै' इति फलभक्तेरेव कथनम् अपि च गौण्या इति कीर्तनादिरूपाभक्तिर्भवति। तेषां दृष्ट्या 'उपसंहारात्' इत्यस्य भजनोपसंहारात् इत्यनेन भक्तिभजनश्रवणकीर्तनादीनामेकार्थत्वं भवतीत्यर्थो ज्ञेयः, तेषां साधनञ्च प्रतिबन्धकदुरितनिवृत्तिद्वारा परभक्तिप्रतीतिभावोऽस्ति तैर्मतम्।

तेषां मते 'गौण्या भक्त्या भजनोपसंहाराद्' इत्यनेन आराध्यत्वज्ञानरूपगौणभक्तिमतां कीर्तनादिभजनानां कर्तव्यमुक्तम्, तस्मात् 'सोमेन यजेत' इत्यादौ सोमवता योगेनेष्टं भावयेदिति गुणविशिष्टविधानवदत्रापि तादृशभक्तिमद्भिः कीर्तनादिभजनैः परभक्तिमुत्पादयेदिति तादृशभक्तिविशिष्टविधानमेवेति भावः।[64]

मिश्राणां सूत्रे पाठभेदोऽवगम्यते – 'भक्त्याभजनोपसंहाराद् गौणी परायै तद्धेतुत्वात्' इति सूत्रं प्राप्यते। नारायण तीर्थैः 'गौण्याः परायैं' इति स्वीकृतम्। मिश्राणां मते –

**'भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।**

**भक्त्या मामभिजानति यावान् यश्चास्मि तत्त्वतः।।'**[65]

इत्यस्य भगवद्वाक्यस्य गुणीभूतया भक्त्या भगवतस्तत्त्वज्ञानं भवतीत्यर्थः। तत्त्वज्ञानानन्तरं मुख्यभक्तिस्वरूपं भगवद्भजनं भवतीति कथनेन कीर्तनस्मरणार्चनादिलक्षणा भगवद्भक्तिः प्रीतिलक्षणमुख्यभक्त्यै क्रियते ज्ञानद्वारा प्रीतिहेतुत्वात् इति मत्वा स्वर्गकामनाया यागादि–हेतुत्ववद् कीर्तनादेः प्रीतिरूपमुख्यभक्ति–स्वरूपोपासनाहेतुत्वं प्रतीयत इति तैः प्रतिपादितम्।[66]

त्रयाणां भाष्याणां तुलनायां कृतायां स्वप्नेश्वराचार्यैः परा इति पराभक्तिः फलभावनया न विधीयते इत्युक्तम् किन्तु नारायणतीर्थैः. 'सोमेन यजेत' इतिवद् परभक्तिमुत्पादयेदिति तादृश भक्तिविशिष्टविधानमेवैतद् इति कथितम्, मिश्रैः कीर्तनादयः प्रीतिरूपमुख्यभक्तिस्वरूपो– पासनाहेतुः प्रतीयते इति मतम्। एषु त्रिषु भाष्येषु भक्तिग्रन्थं भक्तिविषयञ्च अग्रे नेतुं नारायणतीर्थानां व्याख्या सहाय्यीभूता इति ज्ञायते। यतः परभक्तिस्वरूपकथनं तस्याः साधनानाञ्च कथनम् मुख्यम् तत् वैशेद्येन नारायणतीर्थाः कुर्वन्ति इति दृश्यते।

सूत्रम्–**ध्याननियमस्तु दृष्टसौकर्यात्।।**[67]

स्वप्नेश्वराचार्याणामनुसारं ध्याने ध्येयनियमकथनं दृष्टार्थं भवति, यतोहि नानाविषयेषुचित्तविक्षेपाः भवन्ति। तस्य अदृष्टार्थं चिन्त्यते चेत्

विकल्पादिप्रसङ्गो प्रसज्येत। अत एव गोपीनां शिशुपालादेश्च जीवने ध्याननियमं विनापि ध्यानस्य दुर्लभं फलं प्राप्तम्।[68]

नारायणतीर्थानामनुसारं सूत्रे 'तु' शब्दो नकारार्थकः अतः सूत्रार्थः – 'ध्यानेनियमः न इति' भवति। ध्याने दिग्देशकालनियमः न भवति इति अत्र 'यस्मिन्देशकालादौ मनस ऐकाग्र्यं तत्रैव युञ्ज्यात्' इत्येनां श्रुतिमुदाहरन्ति।

किन्तु 'समे शुचौ वह्निवालुकाविवर्जिते' इत्येतद्वचनं श्रूयत इति प्रश्नेजाते नारायणतीर्थाः स्पष्टीकुर्वन्ति यत् प्राणायामार्थं तादृशस्थानमपेक्षते अन्यथा रोगप्रसङ्गोद्भवेत्। एवञ्च ध्याने दिग्देशकालादिनियमः नास्ति एव। एतद् भगवतः बादरायणस्य वचनादपि सिद्धीकुर्वन्ति –**'यत्रैकाग्रता तत्राविशेषात्'**[69] इति। अतः ध्याननिर्वर्त्यायां भक्तावपि देशकालादिनियमः न भवतीति नारायणतीर्थाः स्पष्टीकुर्वन्ति।[70]

मिश्राणां मते सूत्रे 'तु' इत्येतद् ध्याननियमवाच्यम्। 'दृष्टसौकर्यात्' इत्यस्य अर्थश्च उपासनायां मनःस्थैर्यमपेक्ष्यते इति तस्मात् मनःस्थैर्यात्मकदृष्टफलसौकर्यार्थं ध्याननियमः उक्तः। तेषां मते सर्वत्र ईश्वरबुद्ध्या भगवद्ध्यानमिष्टसाधनम् अस्ति। यदि अदृष्टार्थत्वं स्वीक्रियते तर्हि प्राप्त त्याग अप्राप्तकल्पनादि अष्टविधदोषप्रसङ्गः आपद्येत। एवञ्च सर्वविधानां ध्यानादी– नामीश्वरतोषः मनःस्थैर्यं दुर्वासना दुरितक्षयशुभादृष्टादिद्वारा मुक्तिसम्पादकत्वमस्ति इति।[71]

अस्य सूत्रस्य व्याख्यानेषु नारायणतीर्थानां स्वप्नेश्वराचार्याणाञ्च मतं समत्वं भजते, मिश्राणां तु तद्विरुद्धमेव। अन्येषु सूत्रविवरणेषु स्वप्नेश्वराचार्याणां भाष्येण साकं साम्यं भजन्तः मिश्राः अस्मिन्

सूत्रविवरणे स्वमतमेव दृढं प्रतिपादयन्ति इति भासते, वैमत्येनापि विषयहानिः न जायते इति ज्ञायते।

**सूत्रम्– पत्रादेर्दानमन्यथा हि वैशिष्ट्यम्।।**[72]

स्वप्नेश्वराचार्याः अस्य सूत्रस्य व्याख्याने वदन्ति यत् भगवन्तमुद्दिश्य यत्किमपि दानं क्रियते तत् तद् भक्त्यङ्गत्वविधिः भवति अन्यथा प्रत्येकं दानस्य विशिष्टं विधानं स्यात् न तु तथा। तस्मात् पत्रादिशब्देन प्राप्तं दानमनूद्य "उपव्ययते" इत्यनेन नित्योपवीतस्य दर्शाङ्गत्वविधिरेव युक्त इति उदाहरणं दर्शयन्ति।

किन्तु नारायणतीर्थाः अस्य मतस्य खण्डनं कुर्वन्ति। तेषामनुसारं अन्यथा शक्तौ पत्रादेर्दानं पुष्पादिस्थानमेव भवति। सूत्रस्थं 'वैशिष्ट्यम्' इत्येतद पदं मुख्यतां ज्ञापयतीति तेषां मतम्। तस्माच्च पुष्पादिदानस्य मुख्यतायामपि यदि शक्यं न भवति तर्हि पत्रादेर्दानमपि पुष्पादिदानतुल्यमेव भवति इति सूत्रस्यार्थः अस्ति इति तैः मतम्।[73]

मिश्राणां भाष्ये एतत् सूत्रं न दृश्यते।

सूत्रगतपदार्थवैलक्षण्येन सूत्रावबोधं सारल्येन कारयितुं नारायणतीर्थाः यशोऽवाप्नुवन् इति वक्तुं शक्यते।

**सूत्रम्– सुकृतजत्वात् परहेतुभावाच्च क्रियासु श्रेयस्यः।**[74]

स्वप्नेश्वराचार्यानुसारं सर्वकर्मसु भक्तयः श्रेयस्यः एव एतदर्थं हेतू दर्शयन्ति, परभक्तिहेतुत्वात् इतरधर्मजन्यत्वाच्च। भाष्येऽस्मिन् तैः भावशब्दो भक्तौ एव प्रयुज्यते इति स्पष्टीकृतम्[75]।

नारायणतीर्थैः अस्य सूत्रस्य व्याख्याने स्वधर्मविचारः कृतः। तेषामनुसारं क्रियासु इत्यस्य सूत्रोक्तस्यार्थः स्वस्ववर्णाश्रमोचितशुक्लकृष्णक्रियासु

इति अस्ति कारणञ्च तस्य शुक्लतयैकान्तिकात्यन्तिकपुमर्थहेतुः इति। तेषामनुसारम् स्वधर्मं हित्वापि यद् हरेः चरणाम्बुजभजनमुक्तं तद् न सावधारणम्। स्वधर्मानुसारमितिकथने वर्णाश्रमाचारपूर्वकमित्याशयः अस्ति।वर्णाश्रमाचारपूर्वकहरिभजनेन ईशप्रसादः प्राप्यते इति ज्ञायते।[76] किन्तु स्वधर्मं हित्वापि भजतां मङ्गलमेव प्रोक्तम् इति आक्षिप्यन्ते, तदा नारायणतीर्थाः वदन्ति **यत्** स्वधर्मं हित्वापि भगवन्तम् उत्कटभावेन भजतां मङ्गलं भवत्येव[77]एतदर्थं तैः 'उत्कटप्रेमवतां न साधनावृत्तिः इति स्पष्टीकृतःभागवद्वाक्यञ्चोदाहृतं [78]किन्तु यत् सुकृतजत्वं हि भक्त्युत्पादने क्षमञ्चेत् तत्कृते स्वधर्माचरणमनावश्यकम् इत्येतां शङ्कां समाधातुं पुराणोक्तमुद्धरन्ति आचार्याः नारायणतीर्थाः[84]

स्वधर्माचरणेन निष्कल्मषेन मनसा यस्मिन्कस्मिंश्च जन्मनि वासुदेवः समभ्यर्चितः तस्मात् सुकृतात् भक्तिरुत्पद्यते अस्मिन् जन्मनि, अतः हरिभजनं बहुतरसुकृतस्यैव फलमुक्तं नारायणतीर्थैः।

अस्मिन्विषये पुनः शङ्कां विचिन्त्य समाहिता नारायणतीर्थैः यद् सुकृतजत्वं स्वर्गादावपि अस्ति अतः श्रैष्ठ्यंसिद्धीकर्तुम् एव सूत्रे द्वितीयः हेतुः प्रोक्तः परहेतुभावादिति। परभक्तिहेतुत्वमपि भक्तीषु भवति अत एव द्वाभ्यां हेतुभ्यां ताः स्वस्ववर्णाश्रमोचितक्रियासु श्रेयस्यः सन्तीति।

एवं नारायणतीर्थैः गौणभक्तेः श्रेष्ठत्वं प्रतिपादयितुं सूत्रकारैः सूत्रीकृतहेतुद्वयमित्थं समर्थितम्। अतः तेषां भाष्ये सूत्रार्थः अतितरां स्पष्टीभवतीति ज्ञायते।

मिश्राणां भाष्यंनारायणतीर्थानां भाष्यसममेव अस्ति।

सूत्रम्–**लघ्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात्।।**[80]

लघ्वपि सकृत्स्मरणकीर्तनादि महतामपि पापानां नाशकं भवतीति स्वप्नेश्वराचार्याणां भाष्यम्। कारणञ्च तस्य भक्ताधिकारे प्रायश्चित्तान्तराणां सर्वेषां त्यागलक्षणहानिप्रतीतिः इति। भाष्येऽस्मिन् स्वप्नेश्वराचार्यैः भगवद्वाक्यान्युद्धृत्य सूत्रमिदं भक्त्यधिकारं प्रकटयतीति विवृतमिति भासते।तेषामनुसारं,[81] काम्यकर्मत्यागः न प्रोक्तः संन्यासिनमनूद्य तस्याधिकारिकमिदं वचनमस्तीति। लघोः अपि महत्क्षेपकत्वम्[82]इत्येतेनोक्त्वा '**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः**'[83] इत्यादिना काम्यकर्मत्याग एवोक्तः न संन्यासाश्रमे प्रायश्चित्तान्तर–त्यागसङ्कल्पेन केवलभगवन्नामादिभिरार्तिं यस्तर्तुमिच्छति तदधिकारिक्रमेण सकृत्स्मरणादि इति स्वप्नेश्वराचार्यैः मतम्। तेषां मते कायक्लेशभयात् यः कर्मणां राजसं त्यागं करोति स त्यागफलं न लभते इति कथनात् कर्मसंन्यासस्य हेयत्वमेव प्रतिपाद्यते इति स्वप्नेश्वराचार्यैः मतम् इति भासते।[84]एवं प्रायश्चित्तान्तराणामपेक्षया लघ्वीअपि भक्तिः एव महतां पापानां नाशिका भवतीति भाष्यादस्मात् ज्ञायते।[85]

नारायणतीर्थाः सूत्रस्थान् पदान् विभिन्नरूपेण प्रतिपादयन्ति तेषामनुसारं 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इत्यस्माद् भगवद्वचनात् ज्ञानवैराग्यादीनां सर्वेषां यत् त्यागकथनमुक्तं तन्नोचितं यतः

यद्भगवतोक्तं[86] तेन सह सूत्रार्थमिदं विरोधं प्राप्स्यति। अतः नारायणतीनामनुसारं सूत्रस्यास्यार्थः–लघ्वपि कीर्तनादिकं महद्भवतीति शरणापन्नस्य सर्वहानात्। शरणापन्नः ऋणित्वादि अभावं प्राप्य समस्तपापनाशकं भवतीति अर्थः।

मिश्राणामनुसारमपि सूत्रार्थम् उपर्युक्तभाष्यद्वयसमानमेवास्ति।

**सूत्रम्– आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्य**वत्।।[87]

निन्द्ययोनिपर्यन्तं भक्तौ सर्वेषामधिकारः भवतीति स्वप्नेश्वरार्याः अस्यसूत्रस्य विवरणं कुर्वन्ति।[88]

किन्तु अस्य सूत्रस्य व्याख्याने नारायणतीर्थानां भाष्यं विलक्षणतां द्योतयति। भाष्येऽस्मिन् नारायणतीर्थैः क्षूद्र–ब्राह्मणविचारः निष्पक्षतया उल्लिखितः। क्षुद्रेभ्यःवेदमन्त्राधिकारः नास्ति इति अस्मिन्विषये बहूनिपुराणवचनान्युल्लिखितानि यथा – 'न मन्त्रेचाधिकारोऽस्ति शूद्राणां नियमः परः।'**एतज्ज्ञाता महासेन चण्डालानपि दीक्षयेत्।।**[89] इत्येतस्मात् याज्ञवल्क्ययामलादिवचनात् नमोन्तादिष्वधिकार–दर्शनात् तत्तुल्यन्यायेन सर्वत्र भक्तावधिकारोऽस्त्येव सामान्यवदिति नारायणतीर्थाः प्रतिपादयन्ति। एवञ्च मोक्षधर्मे शुकस्य व्यासाश्रमप्राप्तौ[90]ब्राह्मणं अग्रे कृत्वा सर्वेषामेव सार्थवेदश्रवणे अधिकारः श्रूयते इति नारायणतीर्थाः स्पष्टीकुर्वन्ति। अस्मिन्विषये च ब्राह्मण–शब्दविचारः तैः सप्रमाणं कृतः। ब्राह्मणत्वादि न जातिविशेषः इति तेषां दृढं मतमपि च सत्यादिगुणवत्वलक्षणमेव ब्राह्मणत्वमिति तैः वनपर्वस्थ सर्पयुधिष्ठिरसंवादमुद्धृत्य निश्चयेन प्रोक्तम्। तत्र[91]एवञ्च शूद्रादिना नीचेन पुराणश्रवणभाषाप्रबन्धाध्ययनत एव ज्ञानमुत्पाद्य भक्तिः सम्पादनीयेति नारायणतीर्थैः स्वमतं दृढ प्रतिपादितम्। अपि च अस्यसूत्रस्य भाष्यस्य वैलक्षण्ये'कीर्तनं सर्वाधिकारः' इत्यपि विषयः वैशिष्ट्यपूर्णमस्ति। निन्द्ययोनिमारभ्य स्त्रीशूद्राणां सर्वेषां ब्राह्मणानामपि कीर्तने अधिकारदर्शनात् अस्यसूत्रस्य भाष्यं द्वाभ्यां भाष्याभ्यां वैलक्षण्यं भजते इति स्फुटीभवति।

मिश्राणां व्याख्यानं स्वप्नेश्वराचार्याणां भाष्येण सह साम्यं भजते।

सूत्रम्—**अतो ह्यविपक्वभावानामपि तल्लोके।**[92]

भक्तौ सर्वेषाम् अधिकारः भवति अतः येषां परभक्तिः विपक्वभावं न गता तेषां भगवल्लोक परभक्तिसाधनानुष्ठानम् अस्मात् सूत्रात् प्रोक्तम् इति स्वप्नेश्वराचार्यैः मतम्।

नारायणतीनामनुसारं निन्द्यजातिस्वभावात् प्राक्संचितदुष्कृत—निचयाद्वा अशुद्धान्तःकरणानामपि भगवद्भक्तौ अधिकारः सम्पद्यते।

मिश्रैः अविपक्वभावानामित्येतं विहाय '**विपक्वभावानामपि**' इत्येव स्वभाष्ये स्वीकृतं। तेषामनुसारं निर्गतकामक्रोध लोभमोहमूलीभूत—वासनानामपि मुक्तिचतुष्ट्यम—निच्छतां सिद्धपुरुषाणां भक्ति तत्साधनानामाचरणञ्च पुराणादौ श्रूयते।[93]

मिश्राणां मते उपर्युक्तैः वचनैः नैर्गुण्येऽभिनिविष्टानां श्रीशुकदेवादीनां भक्तिस्तत्साधनाचरणञ्च इति। मिश्राणामनुसारं क्वचित् अविपक्वभावानामिति पाठः दृश्यते। तत्स्पष्टयितुं ते भक्तद्वैविध्यं दर्शयन्ति। तत्त्वमसीत्येतादृशमहावाक्येन भगवदभेदनिश्चयेन परिपक्व भावाः अनीदृशाश्चेति। द्विविधाः भक्ताः। तत्र सायुज्यं प्रथमस्य, सालोक्यञ्चद्वितीयस्येति तैः मतम्।

सूत्रम्—**क्रमैकगत्युपपत्तेस्तु।।**[94]

'**ये तु निष्कलुषा लोके पुण्यपापविवर्जिताः।**'[95] इत्येवमुद्धृत्य ये निष्कलुषाः तेषाम् आदित्यमण्डलद्वाराऽनिरूद्धप्रद्युम्नसंकर्षणेन व्यूहक्रमेण गतिमभिधाय वासुदेवे गतिःअभिहिता[96]। ततः पश्चात् [97]चतस्रः गतयः प्रोक्ताः तासु भगवत्प्राप्त्या एकगतेः अभिधानं कृतम्। एवं द्वयोर्विधानयोर्मध्ये विरोधो दृश्यते इति कैश्चित् चिन्त्यते चेत्

नारायणतीर्थाः वाक्यद्वयोः समन्वयं कृत्वा पक्वापक्वानुरागभेदेन गतिभेद इत्येव कल्पनीयमिति समादधति। तेषामनुसारं येषां परिपक्वानुरागः अस्ति तेषां गतिः श्रुत्या एव ज्ञायते – 'न तस्य प्राणा उत्क्रामन्ति' इत्यनया मार्गगत्यभावेन भगवता सह अभेदरूपा भगवत्प्राप्तिः प्रोक्ता। येषान्त्वऽपरिपक्वानुरागो अस्ति तेषां कृते साधनभक्त्या भगवल्लोकप्राप्तिः कथिता।

अस्मिन्विषये साधनभक्तिः भगवल्लोकप्राप्तिहेतुरिति कथिता किन्तु भगवल्लोकप्राप्त्यर्थं तत्त्वज्ञानद्वारा सा हेतुर्भवति, तत्त्वज्ञाने वेदान्तवाक्यविचारः हेतुर्भवति किन्तु वेदान्ते शमादिसाधनचतुष्टयस्येव अधिकारः मलिनानां नेति प्रसिद्धमित्येनामाशङ्कामुपस्थाप्य समादधति नारायणतीर्थाः यद् वेदान्तविचारे अधिकारो न भवति चेदपि तत्त्वज्ञानार्थं साधनभक्तिवेदान्तविचारयोः वैकल्पिकहेतुत्वं विद्यते तस्मात् वेदान्तविचारं विनापि साधनभक्त्यैव तत्त्वज्ञानं भवितुं शक्यते ततश्च भगवल्लोकप्राप्तिः शक्या।

एवञ्च अपरिपक्वानुरागिभिः श्रवणादिसाधनभक्त्या भगवदनुग्रहं सम्प्राप्य तत्त्वसाक्षात्काररूपापरवैराग्यप्रेमभक्तिः प्राप्तुं शक्या यस्या उदये मुक्तिमाप्नोति, इत्येवं स्वमतं भागवतस्य वचनैः प्रमाणीकुर्वन्ति आचार्याः[98]

एवं सूत्रकृतां सूत्रेषु निबद्धाशयप्रकटने नारायणतीर्थानां मर्मग्राहित्वं चिन्तनसामर्थ्यञ्च दृग्गोचरीभवतः।

'क्रमैकगत्युपपत्तेस्तु' इति सूत्रम् उपर्युक्तद्वाभ्यामपि आचार्याभ्यां स्वीकृतं किन्तु मिश्रैः स्वभाष्ये 'क्रमैकमप्युपपत्तेस्तु'[99] इत्येवं शाण्डिल्यसूत्रं स्वीकृतम्। तेषां मते भगवल्लयात्मकसायुज्यगतेः प्रकारद्वयं विद्यते। प्रथमस्तु सूर्यमण्डलानिरुद्ध– प्रद्युम्नसंकर्षणलोके गमनानन्तरं क्रमेण

सायुज्यम् अपरस्तु साक्षादेव सायुज्यमित्यक्रमेण। द्वयोर्मध्ये भगवदभेदज्ञानरूपया भक्त्या साक्षादेव सायुज्यं भवति तद्रहितया च क्रमेणसायुज्यं भवतीत्येवं क्रमगतिरभिप्रेता, तस्याः मध्ये च लोकान्तरप्राप्तिः कल्पिता तस्यामपि भक्तिर्भवति, किन्तु सूत्रस्थेन 'तु' इत्यनेन शब्देनाक्रमगतिव्यवच्छेदः ज्ञापितः इति मिश्रैः मतम्। यतो हि भगवदभेदज्ञानेन साक्षाद् सायुज्यं भवति तत्र तदैव तल्लयेन भक्तेरसम्भवादिति मिश्राणां मतम्।

सूत्रम्–**उत्क्रान्तिस्मृतिवाक्यशेषाच्च।।**[100]

भगवल्लोकगमनविषयकेऽस्मिन् सूत्रे उत्क्रान्तिविषयं स्पष्टीकर्तुं स्वप्नेश्वराचार्याः भगवद्वाक्यमुद्धरन्ति –

'**भक्त्या युक्तो योगबलेन चैवं**'[101] इति। तेषामनुसारम् उत्क्रान्ति रित्यनेन शब्देनोपक्रमः प्रोक्तः। तथा जपेनानुस्मरणेन च परमा गतिः प्रोक्ता। [102]एवं भक्त्या, योगबलेन जपेन स्मरणेन वा परमगतिः प्राप्यते इति भगवतोक्तां परमां गतिं प्राप्तुं क्रमोऽपि तत्रैव भगवद्गीताया अष्टमाध्याये प्रोक्तो दृश्यते [103] इत्येवम् स्वप्नेश्वराचार्याणां मतेअविपक्वभावानामेव तल्लोक–प्राप्तिरुक्ता न तु विपक्वभावानां यतो हि तस्मिंल्लोके साधनायाः अननुष्ठानं श्रूयते।[104]

अविपक्वभक्तानां यदि तत एव क्रममुक्तिरित्युक्तं तर्हि तत्कालीनस्मरणविधिवैयर्थ्यमापद्येत तेषाञ्चाविपक्वभावानां परिपक्वानुरागो न भवेदेवानेन च '**पुरुषः सः परः पार्थ भक्त्या लभ्यस्त्वनन्यया**'[105] इत्येतस्मिन् वचने कथित – 'अनन्यया भक्त्या' इत्यनेन सह च न सङ्गच्छेत् अतः तल्लोकेऽपि

साधनभक्तेरनुष्ठानस्याधिकारः भवतीति स्वप्नेश्वराचार्यैः व्याख्यातम्। भक्तिः कर्मात्मिका नास्तीत्येको विषयः तैरत्रोल्लेखमात्रं कृतो दृश्यते।

नारायणतीर्थानामनुसारमपि परिपक्वानुरागाणामपि तल्लोकगमने तत्र गौणभक्त्यनुष्ठानं न स्यात् ब्रह्मसाक्षात्कारपरमानुरागाभ्यामेव मुक्तिसम्भवः। किन्तु श्रवणमित्यादिकं यत् तत्कालीनं प्रोक्तं तत्तत्र अर्थवादार्थं लोकसङ्ग्रहार्थं वा प्रोक्तमिति कैश्चित् पृच्छयते तदा नारायणतीर्थाः स्पष्टं वदन्ति, लोकसङ्ग्रहार्थमेव श्रवणादिकम्। '**तदुपर्यपि बादरायणः सम्भवात्**'[106] इत्येतस्मिन् सूत्रेबादरायणैः उपासनाधिकारे सम्भवः इत्येव हेतुः प्रोक्तः। अतो ज्ञानिनामिव भगवदवताराणामिव अश्वमेधादिकरणं लोकसङ्ग्रहार्थमेव भवति। देवानां भक्तौ अधिकारो न इति नारायणतीर्थानां स्पष्टं मतमिव भाति। एवञ्चास्य सूत्रस्य विवरणे नारायणतीर्थैरुत्क्रान्तिगमनागमनविचारः वैशद्येन कृतः। तत्र परमेश्वरोपासकानां कर्मिणां च गमनमित्येष विषयः तैः स्पष्टीकृतः।

अस्मिन् प्रसङ्गे केषाञ्चन आशङ्कामुपस्थाप्य दूषयित्वा स्वमतमुपस्थापयन्त्याचार्याः नारायणतीर्थाः। आशङ्काईदृशी – यद् उच्यते शुभम् अनुतिष्ठतांशुभा गतिरशुभमनुतिष्ठतां अशुभागतिर्भवतीति। किन्तु कदाचित् पूर्वजन्मसु सञ्चितविविधकर्मवतां तज्जन्मनि यद्यपि शुभमनुतिष्ठते तथाप्यन्तकाले पापकर्मजा अशुभा वा गतिर्दृश्यते तथा च तादृग्विधानामेव अशुभमनुतिष्ठतामन्तकाले शुभा गतिः दृश्यते तर्हि उत्क्रान्तीनां का गतिर्भवेदित्येतां शङ्कां समादधानाः नारायणतीर्थाः वदन्ति, 'उत्क्रान्त्यव्यवहितकाले मत्युनुगुणैव गतिर्भवतीति। किन्तु 'पापः पापेन कर्मणा पुण्यः पुण्येन' इत्यनया श्रुत्या तज्जन्मकृतकर्मानुसारत एव

गतिर्भवतीति पृष्टे सति नारायणतीर्थाः स्पष्टं प्रतिपादयन्ति यद्, 'तदैव सक्तः सह कर्मणेति लिङ्गं मनो निषिक्तमस्य' इत्येतस्याः श्रुतेः आसक्तिविषयेनैव गतिः प्रतिपाद्यते। भगवता यदुक्तम्'[107] इति, तथापि शरीरावसानसमये या वासनाः उद्बुध्यन्ते ताभिरेव फललाभः प्रतिपादितः। भरतादीनामुल्लेखं कृत्वा अन्तकालभवमत्युनुगुणैव गतिर्भवेन्न कर्मानुसारिणी इति नारायणतीर्थाः स्पष्टयन्ति।

अस्मिन्विषये पुनराशङ्कामुपस्थाप्य निराकृत्य च यद् '**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्**'[108]इत्यादि सूत्रेण, भगवद्वचनाच्च [109]

बहुविधकर्मसु यस्य कर्मणः यादृशो विपाको भावी तदनुगुणवासनाया एवोद्गमो भवितुमर्हति, इति सूत्रेण ज्ञायते, भगवद्वचनाच्च पुरुषस्य स्वतन्त्रप्रयत्नस्य निष्फलत्वं कर्ममयप्रकृत्यधीनतैव बोध्यत इति, एतां शङ्कां दूरयितुं नारायणतीर्थाः वदन्ति फलमपेक्ष्य एव कर्मानुष्ठानं भवति फलस्यासक्त्या सन्ततस्मरणादिना च तन्मात्रहेतुभूतादृष्टलेशेन वासनोद्गमः च भवतीति सत्यम् एतदर्थमेव भगवता –'**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च**' इत्युक्तम्। अपि च '**यं यं वापि स्मरन्**' इत्यादि वचनैः अन्येन वचनेन च[110]कर्माऽनधीनपुरुषप्रयत्नमात्रसाध्याया सन्ततस्मरणासक्तिः सूचिता तया फलोन्मुखकरणेनापि वासनोद्गमभ्युपगमे बाधकाभाव एव। एवञ्चान्तकाले भगवदनुसन्धानं पुरुषार्थ इत्यनेन हेतुना भगवत्स्मरणमवश्यमभ्युपेयमिति नारायणतीर्थाः स्पष्टयन्ति स्मृतिञ्च उद्धरन्ति [111]

एवमुक्ते सति पुनः आशङ्कामुपस्थाप्य दुर्वासनोद्बोधनविषयकं चर्चितं यत् सन्ततानुष्ठानं कुर्वतः पुरुषस्य दुष्टसामग्र्या इव दुष्टप्रारब्धस्यापि

दुर्वासनोब्दोधकत्वस्य सम्भवात् दुर्वासनामाहात्म्यादनुद्धारप्रसङ्गः दुर्निवारः भवेदित्येतामाशङ्कां समादधानाः नारायणतीर्थाः वदन्ति यत्, प्रत्येकस्य विलक्षण एव सञ्चितसदसत्कर्मणोः वासनाप्रर्वके भवतः। कदाचित् बहुतरोपदेशेऽपि कदाचित् उपदेशाभावेऽपि सदसत्प्रवृत्तिः बलवत्तरा, तत्प्रतिबन्धको वा यः बलवान् बलवती वा तादृशमेव फलं लभते। तयोः च अन्तकाले सतोःस्मरणं भवेन्नवेति नाशङ्क्यमिति नारायणतीर्थाः उपदिशन्ति, तेषामनुसारं यद्यपि बलवत्तरप्रतिबन्धकाभावाज्जायमानं भगवदनुचिन्तनम् असत्सङ्गादिदृष्टसामग्रीसम्भवादुर्वासना नाभिभावयति न वा नाशयति तथापि भगवच्चिन्तनेन सत्सङ्गादि– दृष्टसामग्रीसम्भवयासद्वासनया तद्विरुद्धकर्माभिभवात् दुर्वासना सुपरिहारैव। सत्सङ्गत्या सत्त्वोत्कर्षेण भगवच्चिन्तनाभिवृद्धिर्भवति तेन च सदितरसङ्गत्यादेरपि निवारणं सम्भवतीत्येव नारायणतीर्थाः दुर्वासनानामपकरणेन उद्धारप्रसङ्गं विवृण्वन्ति।

नारायणतीर्थानां वैशिष्ट्यपूर्णं चिन्तनमस्य सूत्रस्य विवरणे दृग्गोचरी भवति। तैरिच्छाकृतभगवच्चिन्तनम् अनिच्छाकृत–भगवच्चिन्तनमित्येतादृशो विभागो दर्शितस्तत्रानिच्छयापि भगवन्नामादिवशेनाजामिलादेः समुद्धारं प्रदर्श्य तस्मादनिच्छाकृतेच्छाधीनसत्त्वस्य बलोत्कर्षः प्रोक्तः। सकारात्मकचिन्तनशीलाः नारायणतीर्थाः विश्वासेन प्रतिपादयन्ति यद् '**दुष्कर्म तु सत्त्वाधीनभगवच्चिन्तनादिना यथायोगमभिभाव्यं नाश्यञ्च भवति' इति।**[112] तेषां मते **सुकृतदुष्कृतयोर्दुष्कृतमतिदुर्बलम्, सुकृतन्तु प्रबलमेव।**[113] एवञ्चायासाधीना सद्वासना अन्तसमये फलोन्मुखमप्यसत्कर्म यथायोगमभिभावयेन्नाशयेद्वा इति दृढं प्रतिपाद्य

भगवच्चिन्तनं, सत्सङ्गतिः सत्कर्मेत्यादीनां योगेनान्तकाले सद्वासनोद्गमो भवितुमर्हतीति तेषां विश्वासपूर्णं वचः।

एवमस्य सूत्रस्याधारेण एतद् निश्चीयते यद् नारायणतीर्थाः केवलं दैवे भारमुपन्यस्य स्वभाग्यं न निन्दन्ति न वा स्वपौरुषे निषीदन्ति। तेषामनुसारम् उभयमपि श्रेयसे अनुष्ठेयमित्येव। एवञ्च त्रयाणां भाष्याणां तुलनायां नारायणतीर्थानां भाष्यमतीव वैलक्षण्यंभजते। उत्क्रान्तिविषयं प्रस्तोतुम् अन्यभाष्ययोः अविपक्वपरिपक्वानु–रागाणामेव चर्चा जाता किन्तु नारायणतीर्थैः सम्पूर्णोत्क्रान्तिमार्गं दर्शयित्वा एतदर्थं किं वावश्यकं पाप–पुण्ये, वासनाः कर्म बुद्धिश्चेतासु तद् विचार्य तत्र षड्विध कर्मणां विषये चर्चां कृत्वा भगवच्चिन्तनेन सत्सङ्गत्या सत्कर्मभिः अन्तसमये सद्वासनोद्भवेन उत्क्रान्तिः प्रदर्श्य जीवने उत्क्रान्तिमार्गः एव उपदिष्ट इति भाति।

मिश्राणां भाष्ये स्वप्नेश्वराचार्याणां मतम् अतीव सरलतया सुस्पष्टतया च विवृतमिति भाति। मिश्राणां मते भक्तेः ज्ञानस्य चाधिकारो लोकान्तरे दीपान्तरे खण्डान्तरेऽपि भवति कर्माधिकारस्तु भारतखण्ड एव। भक्तिः कर्मापेक्षया भिन्नेति त्रयाणामपि भाष्यकाराणां समानं मतम्। कर्मणः वर्णाश्रमविशेषः हविरादिसंपत्तिश्च हेतुः अस्ति। तत्तद्वर्णाश्रमाद्यनुसारेण विधिबोधितत्त्वं स्वरूपम्। यथायथं ब्राह्मणादिरधिकारीस्वर्गादि च फलम् अस्ति। भक्तेस्तु भगवद्गुणश्रवणं श्रद्धामात्रञ्च हेतुः। भगवदुद्देश्यकत्वं स्वरूपं, सर्वोऽपि अधिकारी। सालोक्यसामीप्यसारूप्यसायुज्यलक्षणा च भक्तिः फलम्। इत्येवं मिश्रैः भक्तिकर्मणोः भेदः स्पष्टीकृतः।[114]

**महापातकिनां त्वार्तौ।।**[115]

स्वप्नेश्वराचार्याणां मते महापातकिनां कृते आर्तभक्तिं विहाय इतरप्रायश्चित्तानि न सन्ति यतो हि तादृशमहापातकानां नाशाय भक्तिरेवालम् ।[116]

नारायणतीर्थानामपि इदमेव मतं, तेषामनुसारमपि महापातकिनां कृते नामश्रवणकीर्तनादिरूपभक्तिः कथिता तया एव तेषां दिव्यगतिर्भवति [117]इति ।

अपि चमहापातकिनापि निमिषमात्रं यावत् भगवद्ध्याने कृते सः तेजस्वी पावनश्च भवतीति कथनादपि भक्त्या दिव्यगतिर्ज्ञायते ।[118]

अस्य सूत्रस्य भाष्ये यद्यपि सूत्रार्थो द्वयोरपि भाष्यकारयोः समानस्तथापि नारायणतीर्थैः 'आर्त' इत्यस्य शब्दस्य वैशिष्ट्यपूर्णं स्पष्टीकरणं कृतम् । तेषामनुसारं महापातकिषु विनाप्रयत्नैरनायासं वा या आर्तता यश्च पश्चात्तापो वा उत्पद्यते तस्मादेव नामश्रवणकीर्तनादिरूपभक्तिरुत्पद्यते तया च दिव्यगतिः प्राप्यते। आर्तिरनुतापश्च समानार्थकाविति तेषां व्याख्यानात् ज्ञायते। 'अनुताप' इत्यत्र 'अनु' इत्यस्य पश्चात् इत्यर्थः न भवति सः पापचिकीर्षाप्रतिबन्धकः इत्ययमर्थे ग्रहणीयोः इति तेषामतम् अनेन च पापादनन्तरं जायमानः पश्चात्तापो इत्येतमर्थम् अगृहीत्वा पापकार्यार्थे चिकीर्षैव मा भूदिति, तस्याश्चिकीर्षाया एव प्रतिबन्धक–स्वरूपेण 'अनुताप' इत्ययं शब्दो ग्रहणीयो इति नारायणतीर्थैः मतम् ।

अस्मिन् विषये उपपातकिनां विषये चर्चाऽपि तैः कृता। तेषामनुसारं (कैमुतिक–न्यायेन) महापातकिनामित्युक्ते सत्युपपातकिनामप्यन्तर्भावो भवत्येव। अतः महापातकिनां कृते आर्तभक्त्या दिव्यगतिरुक्ता चेदुपपातकिनां कृतेऽपि सैव लाभाय भवेदित्यत्र न शङ्कालेशोऽपि।

एतत् स्पष्टीकर्तुं वदन्ति यदि कोऽपि संन्यासधर्मात् च्युतो यतिः स्वोपपातकत्वमङ्गीकृत्य प्रायश्चित्त–चिकीर्षुः तर्हि तस्य कृतेऽपि भजनादिना शुद्धिः ज्ञाप्यते, यथा –

'**प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम्।।**' इति। यदि उपपातकिनां शुद्धिर्न भवतीति शङ्क्यते तर्ह्यनेन भगवद्वचनेन सह विरोधमाप्नुयादतः प्रायश्चित्तरूपेणभक्त्या शुद्धिर्भवतीति नारायणतीर्थैः दृढं स्पष्टीकृतम्।[128]

एवं सूत्रार्थमतितरां स्पष्टीकर्तुं नारायणतीर्थैः कृतं भाष्यमतीव महत्त्वपूर्णं भासते।

मिश्राणां मते ब्रह्महत्यासुरापानादीनां महापातकानां कृते प्राणान्तिकप्रायश्चित्तस्यैव अभिधानमस्त्यतः तादृश–महापातकं कृत्वा येषां मनसि पश्चात्तापः जायते तेषां कृते आर्तभक्तिं विहायेतरप्रायश्चित्तं नास्त्येवेति।[120]

सूत्रम् –**सैकान्तभावे गीताऽर्थप्रत्यभिज्ञानात्।।**[121]

स्वप्नेश्वराचार्याणां मते 'सा' इति पराभक्तिः। सैव एकान्तभावः नान्यः यतः गीताऽर्थात् प्रत्यभिज्ञायते इति।[122]

नारायणतीर्थैः 'सैकान्तभावे' इत्यस्मिन् पदे समासद्वैविध्येन अर्थवैलक्षण्यं प्रदर्शितम्। तेषां मते सा एकान्तभावः इति प्रथमान्तेन विग्रहेण, सा दिव्यगतिः सैव एकान्तभावः पराभक्तिश्चेति ज्ञायते।

सप्तम्यन्तेन विग्रहेण–'सा एकान्तभावे' इत्येवं क्रियते तदा सा दिव्यगतिः एकान्तभक्तौ परभक्तावेव सम्भवतीत्यर्थः प्राप्यते। अस्मिन्नर्थे हेतुं वदन्ति 'ब्रह्मसंस्थोऽमृतत्त्वमेति' इत्यादि गीतायां कथितार्थस्य मुमुक्षुः केवलं ज्ञानी एव न भवति अपि तु एकान्तभावेनापि सहितो भवति इति ज्ञायते।[123]

अत्र ज्ञानपूर्वकप्रेम्णा अमृतत्त्वं कथितम् अस्मिन्विषये काञ्चिच्छङ्कां विचिन्त्य समादधति – प्रथमान्तपाठे यथासैकान्तभावें इति कृते ज्ञानेनैव सकलपापनिवृत्तिर्भवेत् तर्हि श्रुतिस्मृतीत्यादीनां प्रमाणाभावात् आर्तौ इति कथमुक्तम्? नारायणतीर्थाः समादधति यद् अत एव सैकान्तेति उक्तम्। यथा गीतायां 'सर्वधर्मान् परित्यज्य' इत्युक्तम्, एतस्मात् मुमुक्षुणा ज्ञानेन सह अव्यभिचरितेन भावेनापि सहितो भवेदित्युक्तम्।

तस्माद्भक्तेरेव मुख्यत्वात्तदपेक्षाया आवश्यकत्वम्। तत्रापि प्राप्ताप्राप्तविवेकरीत्या प्रेम्णः फलत्वान्नामग्रहणादिलक्षणार्तभक्तेरेव तत्रोपयोग इत्यभिप्रेत्यात्र तथोक्तमिति सङ्क्षेपः।

मिश्रैः तेषां भाष्ये सूत्रं भिन्नरीत्या गृहीतं तेषां व्याख्याने 'सैकान्तभावे गीतार्थप्रत्यभिज्ञानात्' इत्यस्य स्थाने '**तद् द्वयमपि सा गीताऽर्थ–प्रत्यभिज्ञानात्**'[124] इति दृश्यते। तेषामनुसारम् एकान्तधर्मः दर्शितः, भगवद्गीतायां अनन्यभक्तिः दर्शिता[125], एतद् द्वयमपि पराभक्तिरेवेति। हेतुश्च तत्र गीतार्थप्रत्यभिज्ञानादिति। अर्थात् एकान्तधर्मोऽनन्याभक्तिश्चैताभ्यां द्वाभ्यां सममेव प्रेमलक्षणाया पराभक्तेः प्रत्यभिज्ञानं भगवद्गीतायां भवति। एतत्स्पष्टीकर्तुं नारायणीयोपनिषदि सोऽयम् एकान्तधर्मः कुत्र उक्त इति प्रश्ने कृते सति भगवद्गीतायां भगवता अर्जुनाय प्रोक्त इति समाधानं प्राप्यते। अतः नारायणीयोक्तैकान्तधर्मस्य गीतोक्तानन्यभक्त्योः अभेदः ज्ञायते। इति तद्द्वयमपि सा इति अस्यसूत्रस्याशयः मिश्रैः स्वीकृतः इति ज्ञायते।

त्रयाणां भाष्याणां तुलनायां नारायणतीर्थानां भाष्ये सूत्रार्थः द्विधा प्रोक्तः इत्यनेन कारणेन सूत्रार्थस्पष्टीकरणे तेषां भाष्यं महत्त्वपूर्णमस्तीति ज्ञायते।

सूत्रम् –'**परां कृत्वैव सर्वेषां तथा ह्याह।**'[126]

गौणभक्तिरपि साक्षान्मुक्तिं जनयतीति मन्तव्ये का हानिरिति पृष्टे सति 'परां कृत्वैव सर्वेषां तथाह्याह' इतीदं समाधानपरं सूत्रमस्तीति स्वप्नैश्वराचार्यैः व्याख्यातम्।[127]

नारायणतीर्थाः अस्य मतस्य खण्डनं कुर्वन्ति। तेषां मते परभक्त्यवस्थायाम् अथवा फलभक्त्यवस्थायां भगवत्यासक्तत्वात् मोक्षेच्छाविरहः भवति अतः परभक्तिं कृत्वा मुक्तावपुयोग इति न सम्यक्। अस्मिन्पक्षे पूर्वपक्षमुपस्थाप्य एतावती आसक्तिः कुतो जायते, इति पुनः वदन्ति परमानन्दरूपत्वात् भगवत्यासक्तिर्भवति इति वदन्ति। किन्तु पुनः शङ्का भवति यत् सगुणस्य परमानन्दरूपता तु माययावृता, सा कथं स्फुरेदिति चेत् नारायणतीर्थाः समादधति श्रवणकीर्तनादिभक्तिपरिपाके भगवतः अनुग्रहं प्राप्य तत्त्वावबोधः भवति तेन आवरणनाशश्च सम्भवति इति। स्वमतमेतत् प्रमाणीकर्तुं भागवद्वाक्यमुद्धरन्ति[128] इति। अनेन च भगवन्निष्ठस्य प्रेमभक्तस्य मोक्षेप्याकाङ्क्षाविरहः सुस्पष्टमेव भवति।

अस्य सूत्रस्य विवरणे मोक्षमार्गविचारः नारायणतीर्थैः वैशद्येन कृतः। तेषामनुसारं मोक्षमार्गद्वयम् अस्ति–ज्ञानमार्गो भक्तिमार्गश्चेति। अतः होमप्रकरणे अनुदितहोमनिन्दावद् गीतासु भक्तिप्रस्तावे निर्गुणनिष्ठा निन्द्यते[129]

अस्मिन् मोक्षमार्गद्वयमेवेति कथने शङ्कामुपस्थाप्य दूषयन्त्याचार्याः–यद् मार्गद्वयमेव कथं भवितुं शक्यते यतः भागवते अत्र पुरुषयोग्यताभेदेन सामान्यतः ज्ञानकर्मभक्तीनामेवोपायत्वं दृश्यते तस्मात् ज्ञानकर्मभक्तय इत्येते त्रयो मार्गाः दृश्यन्ते,[130]कुत्रचित्चतुर्थो योगमार्गोऽपि दृश्यते।[131]

नारायणतीर्थाः वदन्ति चत्वारः मार्गाः दृश्यन्ते इति सत्यं तथापि कर्मयोगमार्गयोः अन्तःकरणप्रसादद्वारा ज्ञानभक्त्योरेवोपयोगात् ज्ञानं भक्तिश्चेति द्वावेव मार्गौ। एतत् स्पष्टीकुर्वन्ति बुद्धेरवान्तर जातिः ज्ञानम्। सकलानर्थानां मूलम् अज्ञानं तस्य निवृत्तिः ज्ञानस्य फलमस्ति। अज्ञाननिवृत्त्यर्थं ज्ञानार्थञ्च तत्त्वमस्यादिवाक्यं साधनं भवति। तत्कृते अधिकारी च ब्रह्मविद्यायां साधनचतुष्टयसम्पन्नस्त्यक्त–संसारो भवति।भक्तिस्तु –रागस्यावान्तरजाति। भक्तेः फलं ब्रह्मप्राप्तिः, भगवद्गुणगरिमग्रथनरूपग्रन्थश्रवणादिकं भक्तेः साधनम्, आनिन्द्ययोनिपर्यन्तं सर्वे भक्तावधिकारिणः सन्तीत्येतस्मात् ज्ञानभक्तिश्च मार्गद्वयमेवेति स्वमतमुपस्थाप्य अन्येषां मतमुद्धरन्ति दूषयन्ति च –

केषाञ्चन मते द्रवीभावानपेक्षाद्वितीयात्ममात्रगोचरा निर्विकल्पक–मनोवृत्तिर्ब्रह्मविद्या ज्ञानम् तथैव द्रवीभावपूर्विका मनसः भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः, ज्ञानफलं मोक्षः, भक्तिफलं **विचारयोगरिवज्ञानमेव** अतः ज्ञानावान्तरजातिरेव भक्तिः, ज्ञानयोगः एव एको मोक्षमार्ग इति। किन्तु नारायणतीर्थाः एतन्मतं खण्डयन्ति वदन्ति च ज्ञानावान्तरजातिर्भक्तिः नास्ति अपि तु एतयोः साध्यसाधनभाव उपपद्यते। फलभक्तेः रागावान्तरजातित्व–व्यवस्थापनाद् ज्ञानं भक्तिश्च मार्गद्वयमेव अस्ति।

अस्मिन्विषये सूत्रकृन्मतं स्पष्टीकुर्वन्ति यद् सूत्रकृता भक्तियोग एव एको मोक्षमार्गः सम्मतः। ज्ञानं भक्तिसाधनरूपेण मतं न तु मार्गान्तरम्। सूत्रकृन्मते फलभक्तिः स्वतः पुमर्थरूपैव मोक्षमपि तृणीकरोति। एतत् सूत्रकृन्मतं प्रमाणीकर्तुं वृद्धानां (मधुसूदन सरस्वतीनां वाक्यमुद्धरन्ति) [132]

एवम् अस्य सूत्रस्य भाष्ये नारायणतीर्थानां भाष्यं वैशिष्ट्यपूर्णतां प्राप्नोति। प्रासङ्गिकविषयमनुसृत्य स्वमतस्थापनया सूत्रकृन्मतस्य स्पष्टीकरणेन च नारायणतीर्थानां भाष्यं वैलक्षण्यं भजते।

मिश्राणामनुसारं सूत्रस्यास्य भाष्यमित्थमस्ति सर्वेषां नाम श्रवणकीर्तनादीनां मुख्यभक्त्यङ्गानां प्रकृष्टप्रेमलक्षणां मुख्यां भक्तिं सम्पाद्यैव मुक्तिप्रयोजकत्वमस्तीति। 'सर्वेषाम्' इत्यस्य नारायणतीर्थाः सर्वेषां ज्ञानान्तानांधर्माणामित्यर्थं स्वीकुर्वन्ति मिश्रैः मुख्यभक्त्यङ्गानामिति स्वीकृतं दृश्यते। मिश्राणामनुसारं गौणभक्तीनां मुख्यभक्तिद्वारैव ईश्वरप्राप्तिलक्षणमोक्ष–जनकत्वमस्ति [133]इति स्पष्टं भवति।

सूत्रम्–**निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत्।**[134]

स्वप्नेश्वराचार्याणां मते इमानिन्युच्चावचानि भूतानि धर्माधर्मानुसारतः निर्माय वेदान् तद्धितकामया निर्मिमीते। यथा पिता पुत्रान् उत्पाद्य अज्ञातपुत्रान् ज्ञापयति तेषां हिताहितपरिहारवाक्यैः, तद्वदयं प्रभुः भूतानि निर्माय तेषां हिताहितकाम्यया वेदान् निर्मितवान् इत्यस्य सूत्रस्यार्थः।[135]

नारायणतीर्थानां मतेऽपि सूत्रार्थः अयमेव किन्तु निर्मायोच्चावचम् इत्यनेन कथनेन ब्रह्मणः जगत्कारणत्वविषयस्तैः चर्चितः। तेषामनुसारं पितृवद् निर्माय इति कथितेन ब्रह्मणः सृष्टि–निर्मितौ निमित्तत्वं प्राप्यते, अभेद–कथनेन च ब्रह्मणः उपादानत्वं कथितं भवति। अतः ब्रह्म जगदभिन्ननिमित्तोपादानमिति भावः। एतन्मतं नारायणतीर्थानां सिद्धान्त एवास्ति। विषयेऽस्मिन् ब्रह्मणः कर्तृत्वविषयः वेदस्य च पौरुषेयत्वविचारः नारायणतीर्थैः वैशद्येन विवृतः।

नारायणतीर्थाःएवं वदन्ति केषाञ्चन मते वेदा अपौरुषेयाः सन्ति अतः 'श्रुतीश्च निर्मिमीते पितृवद्' इति सूत्रेण ब्रह्मणः पितृवत् कर्तृत्वकथनेन वेदानां पौरुषेयत्वमापतेदिति। एतेषां मते मृत्पिण्डघटवत् कार्योत्पादानयोरेकशक्तिमत्त्वनियमः ब्रह्मतत्कार्येषु न दृश्यते – अतः तादृशोपादानकारणत्वं ब्रह्मणः न भवति। यदि उपादानकारणत्वं गृह्यते तर्हि ब्रह्मणः कार्यं वेदाः, वेदाः स्वयमज्ञाः परन्तु जीवानां सर्वार्थगोचरप्रकाशजनकाः सन्ति तद्वत् ब्रह्मणः अज्ञत्वमापद्येत इति। एनां शङ्कां समादधानाः नारायणतीर्थाः ब्रह्मणः कर्तृत्वविषयम् अतितरां स्पष्टीकुर्वन्ति यद् ब्रह्मणा श्रुतयः निर्मिताः किन्तु ब्रह्मणः कर्तृत्वमत्र अर्थमुपलभ्य रचयितृत्वरूपेण न गृह्यते, न तु उच्चारयितृत्वरूपेण नापि पूर्वक्रमानपेक्षया स्वतन्त्रक्रमेणोच्चारयि–तृत्वरूपेण स्वीक्रियते यतः तर्हि अर्थमुपलभ्य रचयितृत्वात् ब्रह्मणः वेदकर्तृत्वमङ्गीक्रियते तर्हि ब्रह्मणः सापेक्षत्वलक्षणं पौरुषेयत्वमापद्येत। अर्थात् किमपि दृष्ट्वा वेदानां रचना जाता इत्यर्थो भवेत् तस्माच्च सापेक्षलक्षणं पौरुषेयत्वम् आपद्येत।

यदि उच्चारयितृत्वात् ब्रह्मणः वेदकर्तृत्वम् इत्यङ्गीक्रियते तर्हि तत्र अंशद्वयम् आयाति –

1) कस्यचिच्छ्रुत्वा वाक्यं यथा शुकः अनुवदति तथेति, तदा तस्मिन्प्रसङ्गे शुकस्य कर्तृत्वमापद्येत, द्वितीयन्तु

2) शिष्यः गुरुवाक्यं श्रुत्वा वदति चेत् शिष्यष्य कर्तृत्वमापद्येत अथवा मौनं पालयतः कस्यचित् रचनां यः कोऽपि प्रथममुच्चरेत् स एव तस्य कर्ता भवेत्।

एवं यदि उच्चारमात्रत्वादेव कर्तृत्वमिति वक्तव्यं तर्हि ब्रह्मणः अध्यापकत्वमेव सिद्ध्येत् न तु कर्तृत्वविशेषः। अपि च एकस्य

वेदस्योच्चारणेन् अध्यापकत्वं सिद्ध्यते चेत् सर्वेषां वेदानाम् उच्चारणेन महोपाध्यायत्वमेव भवेत्। तृतीयञ्च

3) यदि पूर्वक्रमानपेक्षया स्वतन्त्रक्रमेणोच्चारयितृत्वात् ब्रह्मणः कर्तृत्वमङ्गीक्रियते तर्हि पूर्वकल्पे रचितक्रमेणैव अस्यामपि सृष्टौ उच्चारणेन कर्तृत्वं न भवति, यदि भिन्नप्रकारेण उच्चारयितृत्वं चिन्त्यते तर्हि वाग्वज्रत्वेन दुरितप्रसङ्ग उत्पद्येत।

इत्थं ब्रह्मणः कर्तृत्वविषयकाः उपर्युक्ताः त्रयोऽप्यंशाः ब्रह्मणः सापेक्षलक्षणपौरुषेयत्वम् अध्यापकलक्षणत्वं दुरितप्रसङ्गञ्च उपस्थापयन्ति अतः ब्रह्मणः कर्तृत्वमुपर्युक्तांशानां दृष्ट्या न स्वीक्रियते इत्युक्त्वा स्वमतमुपस्थापयन्ति आचार्याः नारायणतीर्थाः। तेषामनुसारं परमेश्वरोऽध्येतृणां पुरुषार्थसिद्ध्यर्थं पूर्वकल्पे विद्यमाना वेदो नाम ज्ञानराशिः अस्मिन् कल्पारम्भे तेनैव क्रमेण दीयते। अतो ब्रह्मणोऽध्यापकविलक्षणं वेदकर्तृत्वं नारायणतीर्थैःस्वीतम्। तत्तु अन्यक्रमस्यापेक्षामकृत्वा स्वकृतेनैव क्रमेण विशिष्टवैदिकवर्णानाम् उच्चारयितृत्वमिति।

नारायणतीर्थाः अग्रे प्रतिपादयन्ति यत्, कल्पान्तरेषु प्रचलितं वेदोत्पत्तिरूपं कार्यं ब्रह्मणः एव भवतीत्यस्मिन् शङ्कालेशोऽपि न विद्यते। अत्र किं प्रमाणमिति पृच्छ्यते चेदत्र प्रमाणानि एव न सन्ति यतः प्रमाणानि अन्तःकरणवृत्तयः एव सन्ति तासां ब्रह्मणि सर्वथाऽभावः एव। अपि च पूर्वं ब्रह्मणः उपादानकारणत्वमनङ्गीकुर्वाणान् प्रति नारायणतीर्थाः समादधति यदुपादानकारणत्वेनाङ्गीक्रियते चेदपि ब्रह्मणो वेदानामिवाज्ञत्वं न सिद्ध्यति यतो हि, अनावृतेन चैतन्येन ब्रह्मणा यद् यत् सृष्टं तत्तत् सर्वं स प्रकाशयत्येव अतः सर्वदा सर्वत्र सर्वञ्च

जानाति इति सर्वज्ञशब्दस्य व्युत्पत्तिं सार्थंकुर्वाणः परमेश्वरो वेदानां कर्तास्तीति सिद्ध्यति एतस्मात् च वेदाः पौरुषेयाः इति सिद्ध्यति।

एवं स्वमतं स्पष्टीकृत्य नारायणतीर्थैः सूत्रकृन्मतमपि भाष्ये उल्लिखितं – सूत्रकृता 'निर्मायोच्चावचं' इति जगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं 'श्रुतीश्च निर्मिमीते' इति वेदकारणत्वेन परमेश्वरस्य दृढीकृतम् इति।[136]

एवं नारायणतीर्थानां भाष्ये सूत्रार्थः अतितरां स्पष्टीभवति इति ज्ञायते।

मिश्राणां भाष्यमपि सप्नेश्वराचार्याणां भाष्यसदृशमेव अस्ति।

सूत्रम्–**मिश्रोपदेशान्नेति चेन्न स्वल्पत्वात्।।**[137]

उपर्युक्त सूत्रे पितृवत् जगत्कर्तृत्वमुक्तं किन्तु अयम् ईश्वरः पितृसमः हितः नास्ति पापसाधनहिंसामिश्रितकर्मोपदेशादिति पृष्टे सति स्वप्नेश्वराचार्याः उत्तरयन्ति यत् प्रधानांशः फलसौख्यं तदपेक्षया अङ्गहिंसायाः अल्पत्वाद् मिश्रोपदेशे सत्यपि पितृवत् हितत्वं न निषिध्यते। किन्तु क्रत्वङ्गहिंसायाः फलं पर्यायेण प्रधानफले पर्यवस्यति अतः सामान्यनिषेधस्य विषयत्वं न प्रसज्यते अत्र तु विकल्पः सम्भवति इति शङ्काम्उपस्थाप्य स्वप्नेश्वराचार्याः स्पष्टीकुर्वन्ति यद् अङ्गहिंसायाः अपूर्व–हेतुता भवति चेदपि सामान्यहिंसा पापजनिका एव।[138]

नारायणतीर्थानां भाष्ये परमेश्वरस्य पितृवत् हितकारित्वं मत्वा पूर्वपक्षखण्डनं कृतं दृश्यते परन्तु विषयेऽस्मिन् यज्ञीयहिंसाप्रकरणं वैशद्येन विवृतमस्ति। केषाञ्चन मते '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यस्मिन् विधिवाक्ये अग्नीषोमीयं पशुमालभेत इत्यपि विधिः आयाति एतद् वाक्यमनुसृत्य वैदिकवाक्येषु हिंसायाः विधानं दृश्यते तस्माच्च

वेदमात्रादेव धर्माधर्मयोः निर्णयो यदि भवति तर्हि तेषां वैदिकवाक्यानामस्मिन्सन्दर्भे अधर्मसाधनत्वं सिध्यति।

एतां शङ्कां निराकर्तुं नारायणतीर्थाः वैदिकमन्त्रमेव उपस्थापयन्ति–'यत्पशुर्मायुमकृतोरो वापद्भिराहत अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्व हसः' इति, वदन्ति च एतस्मात् मन्त्रात् अंहसः अर्थात् संज्ञपनरूपिणः अंहसः पापात् मोचयतु इत्यनेन आशयेन मन्त्रेषु अर्थवादेषु पुराणेषु च हिंसायाः अधर्मसाधनत्वमेव प्रतिपादितम् अपि च भगवद्गीतायामपि **'श्रेयान्द्रव्यमयाद्य–ज्ञाज्ज्ञानयज्ञः परन्तप'** इत्यनेन वाक्येन हिंसायाः योगेन विधियज्ञस्य निन्दैव ज्ञापिता। केषाञ्चन मतं दृष्ट्वापि हिंसायाः निरवकाशः अहिंसायाः अवकाशः एव वैदिकवाक्येषूपलभ्यते। अर्थात् हिंसाविधायक वाक्यानामपेक्षया हिंसानिषेधवाक्यानि एव सर्वस्मिन् वेदे प्राप्यन्ते।

यज्ञबाह्यहिंसायाः प्रतिषेधः, यज्ञान्तर्गतायाः हिंसायाः अपवादात्मकविधिवाक्यानि वेदेषूपलभ्यन्ते तस्मात् यज्ञबाह्यहिंसानिषेधः यज्ञीयहिंसाविधायकत्वञ्च सिध्यति।

यज्ञीयहिंसाविषयकं सूत्रकारमतं दृढीकर्तुं भगवद्वाक्यमुद्धरन्ति नारायणतीर्थाः**'त्याज्यं दोषवदित्येके'**[139] इति। एतस्माद्वाक्यात् कर्मत्यागः कैश्चिद् विद्वद्भिः पुरस्कृतश्चेदपि भगवान् अर्जुनं **'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'**[140]इत्यादिभिः वाक्यैः यज्ञं कर्तव्यरूपेणैव उपदिशति। अत एव यज्ञे कृतहिंसा अहिंसारूपिण्येव मन्तव्या। वैदिकवाक्येषु प्राप्यमाणः विधिः अर्थात् 'यजेत' इत्यत्र पापसाधनहिंसायाः उल्लेखः भवति चेदपि स तु निष्प्रयोजनं न भवति सप्रयोजनमेव अतः विशेषविधिः अर्थात् यज्ञीयहिंसा

सामान्यनिषेधरूपतया अर्थात् यज्ञबाह्यहिंसायाः निषेधेन, कर्तव्यरूपेण स्वीकर्तव्ये भवति। महाभारतादौ या हिंसायुक्तयज्ञस्य निन्दा दृश्यते तत्तु अहिंसायुक्तस्य कर्मणः स्तुत्यर्थमेव अस्ति।

यज्ञीयहिंसासन्दर्भे अपरोऽपि कश्चनविषयोऽवधेयो भवति यत् वेदः साक्षात् यज्ञं विधेयत्वेन दर्शयति यज्ञे च हिंसा भवति तर्हि हिंसायुक्तस्य यज्ञस्य अनुष्ठानं वदन् वेदः प्रमाणं भवेत् वा इति। अङ्गविधिषु वर्तमानां हिंसां वर्जयित्वा अङ्गविधिः पूर्णो न भवति। अङ्गविधिनाप्रधानं कर्म–पूर्णं न भवति। ज्योतिष्टोमरूपः प्रधानविधिः साङ्ग एव फलप्रदायी भवति। एवं प्रधानविधिपरिपूर्णताया कृते हिंसारूपस्य अङ्गविधेः अवश्यकरणीयत्त्वं भवति। अतः यद्यपि हिंसानिषेधः पुरुषार्थरूपेण अग्नीषोमीयहिंसायामपि प्रवर्तते तथापि ज्योतिष्टोमविधिः तत्र तं निषेधं निरुणद्धि। यतः अग्नीषोमीयहिंसां वर्जयित्वा प्रधानविधेः ज्योतिष्टोमस्य अनुष्ठानं शक्यं न भवति। यदि अग्नीषोमीयहिंसायामपि निषेधस्य प्रवृत्तिर्भवेत् तर्हि ज्योतिष्टोमरूप प्रधानविधिरेव बाध्येत। अथ च यस्य अङ्गकर्म निषिद्धं तादृशेन प्रधानेन अनिष्टमेव भवति इति कारणेन साङ्गं प्रधानं फलदायि इति वक्तव्यम्।

अत्र अङ्गरहितस्य प्रधानस्य फलजनकत्वमपि वक्तुं न शक्यते, यतः साङ्गमेव कर्म फलदमिति शास्त्ररीतिः। अतः यज्ञबाह्यहिंसायाः दुष्टत्वं यज्ञीयहिंसायाश्च क्रतुपुरुषोभयोपकारकत्वं स्वीक्रियते इति किञ्चन मतं प्रस्तुत्य नारायणतीर्थाः तस्य विवेचनं प्रास्तुवन्।

यद्यपि हिंसा न करणीया इति निषेधशास्त्रं ज्ञात्वा सर्वविधाहिंसानर्थसाधनं इति बोध्यते तथापि यागस्य कृते विहिता हिंसैव यागोपकारिका इति तादृशहिंसाघटितप्रधानयागेनैव

स्वर्गादिफलम–वाप्यते इति च ज्ञाने बाधकं न भवति। एवं हि यज्ञीयहिंसायाः क्रतूपकारकत्वात् वैधत्वं स्पष्ट भवति। परन्तु हिंसा अनर्थकारणम् इति हेतोः यज्ञगतहिंसापि अनर्थकारणमिति ज्ञानं भवति चेत् तादृशानिष्टफलसाधनं प्रधानं कर्म कथं वा प्रवर्तनाविषयो भवेत् यतः बलवदनिष्ठ–अननुबन्धीष्टसाधनत्वं हि लिङ्प्रत्ययार्थः यदि एवं शङ्क्येत यत् प्रधानकर्मस्थलेऽपि प्रवर्तना अनिष्टसाधनम् आक्षिपेत् परन्तु इयं शङ्का अस्मिन् सन्दर्भे न साधीयसी यतः यत्किञ्चिदनर्थहेतुत्वेऽपि हिंसायाः, प्रधानकर्मणि प्रवृत्तिः स्वर्गादिप्रधानफलं प्रति रागातिशयवशादुपपद्यते अर्थात् यः कश्चन अनर्थः भवति चेदपि साङ्गं प्रधानं कर्म स्वर्गरूपं फलं प्रयच्छति इति निश्चयात् तादृशकर्मणि प्रवृत्तिर्भवितुमर्हति।

अतः न हिंस्यात् इति साधारणनिषेधशास्त्रं सर्वत्र प्रवर्तिते चेदपि तदपवादरूपेण यज्ञीयहिंसा तदबाधिता प्रवर्तते इति यज्ञीयहिंसायाः विषये नारायणतीर्थाः स्पष्टं स्वमतं प्राकटयन्।[141]

मिश्राणां भाष्ये साङ्ख्यनैयायिकानां क्रतुहिंसाविषयकं मतं स्पष्टीकृत्य स्वप्नेश्वरभाष्यम् स्पष्टीकृतमिव भासते।

सूत्रम्–**तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत्।**[142]

अस्य सूत्रस्य व्याख्याने स्वप्नेश्वराचार्याः 'तदैक्यं' शब्दस्य तात्पर्यकथनापेक्षया उपाधियोगहान – आदित्यदृष्टान्तयोर्वर्णनं विपुलतया कृतवन्तोऽतो मोक्षावस्थायां जीवस्वरूपविषये तेषां मतं तद्भाष्ये स्पष्टं नोपलभ्यते।[143]

पुरुषार्थरूपस्य मोक्षस्य स्वरूपविषयकचर्चा तृतीयाध्याये समुपलभ्यते। किमयं मोक्षः भगवद्भावरूपो भवति न वेति विचारः सूत्राधारेण

नारायणतीर्थैः कृतः। मोक्षे अत्यन्तैक्ये एव भगवद्भावरूपत्वं सम्भवति। नानात्वं मोक्षे न सम्भवतीति नारायणतीर्थानां मतम्। 3–2–1 सूत्रे शाण्डिल्य महर्षयोऽपि तदैक्यं 'नानात्व–एकत्वम् उपाधियोगहानात् आदित्यवत्' इति सूत्रयन्तः उपाधिसम्बन्धनाशे भगवदैक्यमेव वस्तुतस्सम्भवतीति प्रत्यपादयन्। नानात्वञ्च भेदरूपमुपाधिवशादेव तन्नाशे एकत्वं भेदनाशश्च भवतीति सूत्रतः ज्ञायते। अयं सिद्धान्तोऽद्वैतवेदान्ते प्रतिपादितः। यथा आदित्यः एकस्सन्नपि तडागादिविभिन्नोपाधिषु प्रतिबिम्बितः नानेव दृश्यते तथैव भगवद्भावरूपमैक्यं नानेव दृश्यते उपाधिनाशे एक एव आदित्यः यथा शिष्यति तथा उपाधिनाशे भगवदैक्यं सम्भवतीति सूत्रार्थः।

अस्य व्याख्यानावसरे नारायणतीर्थैः महती काचिच्चर्चा प्रस्तुता। अद्वैतवेदान्तानुसारं सूत्रार्थं गमयद्भिः नारायणतीर्थैः भक्तावपि अद्वैतस्वारस्यं महता वैदुष्येण समर्थितम्। भक्तेरैक्यं वास्तवमित्यत्र श्रुतिप्रमाणं तैः प्रदर्शितम्। 'तत्त्वमसि' इति श्रुतिवाक्यमप्येक्यमेव दर्शयतीति नारायणतीर्थाः कथयन्ति। 'अहं ब्रह्मास्मि' इत्यनेनापि श्रुतिवाक्येन भगवदैक्यं प्रदर्शितम्। अत एव 'तद्ब्रह्म अद्वयमस्म्यहम्' इत्यपि श्रुतिवाक्यं तदैक्यमेव समर्थयतीत्येवं श्रुतिवाक्यैर्मोक्षे भगवदैक्यम् अद्वैतसम्मतरीत्यैव भवतीति नारायणतीर्थैः निरूपितम्। ततश्च पृथग् यत्प्रमाणत्वेन दर्शितं तदपि अद्वैतानुसारि। जीव इति नाममात्रं परमार्थतो ब्रह्मैव मायासहितः परमेश्वर एव व्यवहारदशायां जीवत्वं भजति एक एव आदित्यो विभिन्नजलपात्रेषु विभिन्नवद् दृश्यते तथा परमेश्वरोऽपि विभिन्नेषु शरीरादिषूपाधिषु विभिन्न इव दृश्यते भेदोऽयम् औपाधिक एव। भेदकारणे अज्ञाने नष्टे पात्रापगमे आदित्यवद् भेदापगमे

ब्रह्ममात्रं तिष्ठति। अतः जीवब्रह्मणोः परमार्थतः ऐक्यमेव यत् केनापि प्रमाणेन निरोद्धुम् अशक्यमिति नारायणतीर्थाः सप्रमाणं निरूपयन्ति।

अत्र समुद्रनद्यादिदृष्टान्तानुसारं श्रुतिवाक्यानां तात्पर्यम् अपरे अपररीत्या वर्णयन्ति। तदनुसारं 'तत्त्वमसि' इति वाक्यम् अविभागपरम्। 'ब्रह्मविद् ब्रह्मैव भवति' इत्यादि श्रुतिवाक्यानि लयात्मक–अविभागपराणि अपि च भेदनाशबोधकानि वाक्यानि विभागनाशपराणि–इत्येवं व्यवस्था तैर्दर्शिता। अनयरीत्या विवेचने कृते भगवदैक्यबोधकानां सर्वेषां श्रुतिवाक्यानाम् एकविधं तात्पर्यं न भवति, केवलाविभागः, लयात्मकाविभागः, विभागनाशः इति पृथगर्थत्रयं भवति इति केषाञ्चनमतं नारायणतीर्थैः प्रस्तुत्य निराकृतम्। विभागनाशस्य वा लयात्मकविभागस्य वा पुरुषार्थत्वे प्रमाणं नास्तीति कारणेन तन्मतं न स्वीकार्यम् अपि च न्यायमते दुःखाभावस्य एव मोक्षस्वरूपं वर्णितं, 'आत्यन्तिकी दुःखनिवृत्तिरपवर्गः' इति 'तदत्यन्तविमोक्षोऽपवर्गः' इति न्यायसूत्रेण कथितम्। दुःखाभावस्यैव मोक्षरूपत्वे तदर्थं न कश्चित् विपश्चित् प्रयतेतेति तस्यापुरुषार्थत्वं भवेत् अतो मोक्षस्य दुःखाभावरूपत्वम् अद्वैतवेदान्ते न स्वीक्रियत इति नारायणतीर्थैः पूर्वपक्षखण्डनपुरस्सरम् अद्वैतसिद्धान्तः विशदीकृतः स च इत्थम् –

अद्वैतवेदान्ते ब्रह्मैव पुरुषार्थोऽत एव श्रुतयोऽपि 'तद्ब्रह्म विजिज्ञासस्व येनामतं मतं भवति अविज्ञातं विज्ञातं भवति' इत्यादिभिरनेकैर्वाक्यैर्ब्रह्मण एव पुरुषार्थत्वं प्रतिपादयन्ति। जीवस्य ब्रह्मस्वरूपसाक्षात्कारेण सर्वविधश्रेयो भवतीति हेतोर्ब्रह्मैव पुरुषार्थः। भेदनाशस्तु तत्र विशेषणीभूतोऽर्थात् भेदनाशविशिष्टं ब्रह्म–मात्रं मोक्षो भवतीत्यर्थः। भेदनाशेऽपि द्वयं तिष्ठतीति वचनं न युक्तियुक्तं यतस्तादृशभेदनाशे

श्रुतिप्रमाणं न विद्यते पूर्वपक्षिणा कथितेऽविभागरूपे मोक्षेऽविभागो व्यक्तिद्वयञ्च भवितुमर्हति तत्तु ब्रह्मणि न शक्यमिति कारणेनाद्वैतसम्मतं श्रेयस्करमिति नारायणतीर्थानां मतम् अपि च जीवब्रह्मणोः अभेदस्वीकारे शास्त्रप्रतिपादितः प्रतिबिम्बदृष्टान्तोऽपि नोपपद्यत इति ते कथयन्ति तथाहि शास्त्रे तावत् जीवः ब्रह्मणः प्रतिबिम्बमिति कथ्यते। जीवब्रह्मणोरविभागपक्षे जीवस्य ब्रह्मप्रतिबिम्बत्वं न युज्यते अतः जीवब्रह्मणोरन्योन्याभावरूपः सम्बन्धो ज्ञानेन च तस्य नाश इति स्वीकर्तव्यं भवति। अन्योन्याभावो नाम जीवब्रह्मणोर्भेदः। अयञ्च व्यावहारिकः। तादृशभेदस्य नाशे सति केवलमैक्यं सिद्ध्यति इदमेव श्रुतीनाम् अद्वैततात्पर्यं पारमार्थिकम्।

'तत्त्वमसि' इति वाक्ये तत्–त्वम् इति पदयोः सामानाधिकरण्यं विद्यते तेन च सामानाधिकरण्येन स्वरूपैक्यं नूनं प्रतिपाद्यते। प्रबलतरस्य प्रतिबन्धकस्य अभावे स्वरूपैक्यस्यास्य त्यागोऽनुचित इति नारायणतीर्थानां मतम्। अतः 'तत्त्वमसि' वाक्यप्रतिपादितमैक्यमेव सूत्रसम्मतमिति ते वर्णयन्ति। एवमेव 'भेद एव विभग्नः, भेदमसन्तं कः करिष्यति' इत्यादि वाक्येषु प्रतिपादितस्यान्योन्याभावनाशरूपस्य मुख्यार्थस्य त्यागोऽपि अन्याय्यः' इति नारायणतीर्था स्पष्टीकुर्वन्ति। अतः स्वरूपैक्यं भेदनाशो वा मोक्षशब्दार्थः इति नारायणतीर्थानां मतम्।

अस्य व्याख्यानस्य समवलोकनेन स्पष्टं ज्ञायते यद् नारायणतीर्थैः प्रस्तुतः पूर्वपक्षस्तावत् न्यायादिद्वैतपक्षः। यथा न्यायसिद्धान्तमुक्तावल्याम् अद्वैतपक्षनिराकरणप्रसङ्गे यो वादः प्रस्तुतः स च प्रकृते पूर्वपक्षीकृत्य निराकृत इति भाति। तत्रोक्तं 'मोक्षदशायाम् अज्ञाननिवृत्तावभेदो जायत इत्यद्वैतमतं तत्र निराकृतं यतो वैशेषिकदर्शनानुसारं विभागनामको भेदो

गुणत्वात् नित्योतस्तस्य नाशो न भवत्येवं जीवब्रह्मणोः भेदः कदापि नष्टो भवितुं नार्हति इति न्यायवैशेषिकमतम्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यतीति ते वदन्ति अर्थात् मोक्षदशायां जीवब्रह्मणोर्भेदनाशेऽपि जीवो ब्रह्म च स्थास्यत्येव अतस्तदैक्यं कथञ्चिदपि न युक्तिसहमिति ते वदन्ति। व्यक्तिद्वये तिष्ठत्यपि द्वित्वं नश्यतीत्यपि ते न स्वीकुर्वन्ति 'द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ जीवेश्वरौ भवतः' इति तद्वादः। यथा अद्वैतानुसारं निर्गुणे ब्रह्मणि सत्यत्वरूपधर्माभावेऽपि ब्रह्म स्वयं सत्स्वरूपं भवितुमर्हति तथैव द्वित्वाभावेऽपि व्यक्तिद्वयं भवतीति तेषामाशयः। 'मोक्षावस्थायां जीवब्रह्मणोरभेदो भवतीति प्रतिपादयत् वेदवाक्यं तदवस्थायां जीवस्य दुःखाभावेन परमेश्वरसाम्यमात्रं भवतीति कथने तात्पर्यं न तु तदैक्ये' इति न्यायवैशेषिकमतम्।[144] तदेतत् सर्वं मनसि निधाय भेदनिराकरणपूर्वकं जीवब्रह्मणोरैक्यं प्रतिपिपादयिषुभिः नारायणतीर्थैः सूत्रार्थ एवं वर्णितः।

'ब्रह्मविद् ब्रह्मैव भवति' इत्येतादृशानां वाक्यानां लयात्मकविभाग एव अर्थ इति कैश्चिदुक्तं न युक्तमिति नारायणतीर्थाः अभिप्रयन्ति। तत्र भेदनाशावच्छिन्नस्वरूपैक्यमेव युक्तोऽर्थ इति तेषां मतम्। तद्वाक्ये ब्रह्मैव इत्यत्र 'एव' शब्देन जीवब्रह्मणोरैक्यमेव प्रतिपादितं न तु लयात्मकोऽविभाग इति ते वर्णयन्ति। जीवश्च ब्रह्माभिन्नः अत्रैव श्रुतिवाक्यानां तात्पर्यलाघवम्। यत्रापि समुद्रनद्यादिदृष्टान्तद्वारा तत्त्वं प्रदर्शितं तच्च विभागनाश एव, न तु अविभागरूपोऽतस्तदैक्यं नानात्व इत्यादि शाण्डिल्यसूत्रगतस्य तदैक्य शब्दस्य जीवब्रह्मणोः स्वरूपैक्य एव तात्पर्यमिति नारायणतीर्थाः अद्वैतसिद्धान्तरीत्या सूत्रार्थं सङ्गमयन्ति।[145]

भवदेवमिश्रैस्तदैक्यञ्च अभेद एवेति शब्देनैकेनाभेदपरत्वं सूचितं, अविद्यायामपगतायां स्वरूपेण ब्रह्मैवावतिष्ठत एतदेव मोक्षरूपमिति कथितम्।[146]

त्रयाणां भाष्याणां तुलनायां ज्ञायते यद् नारायणतीर्थानां व्याख्याने यादृश्या विपुलतया मोक्षस्वरूपविचारः कृतः स हि व्याख्यानान्तरे नोपलभ्यते। यद्यपि भवदेवमिश्रैः जीवानां परमेश्वरे सायुज्यं लयश्चेति कथितं तदपि नारायणतीर्थानां व्याख्यानुसारं न युक्तम् अत एव लयात्मकस्याविभागस्य मोक्षरूपत्वं सर्वथा निराकृत्य तैर्मोक्षस्य जीवब्रह्मैक्यरूपमेव संसाधितम्।

सूत्रम्—**पृथगिति चेन्न परेणासम्बन्धात्प्रकाशानाम्।।**[147]

स्वप्नेश्वराचार्याणां व्याख्यानानुसारं जीवाः परमेश्वरात् अभिन्नाः यतः प्रकाशात्मनां जीवानां परेण परमेश्वरेण सह सम्बन्धाभावो विद्यत इति सूत्रार्थः। अत्रअसम्बन्ध इति शब्दस्य व्याख्यानसमये स्वप्नेश्वराचार्यैः संयोगादिसम्बन्धः न दर्शितः प्रत्युत द्रष्टृत्वदृश्यत्वादिलक्षणः सम्बन्धः स्वीकृतः। अत्र सूत्रस्य अवतारिका भिन्नैव दर्शिता। जीवाः प्रकाशात्मनः परस्परं भिन्ना अन्यथा कश्चन मुक्तः कश्चित् बद्ध इति व्यवस्था न स्यात् इति शङ्का प्रस्तुता। स्वप्नेश्वराचार्यमते सेऽयं शङ्का अनीश्वरसाङ्ख्यानां मते युक्ता चेदपि सेश्वरसाङ्ख्ययोगदर्शने सा न सम्भवति यतो जीवास्ते स्वप्रकाशात्मनः। जीवेश्वरयोरैक्ये च जीव इव परमेश्वरेऽप्यसर्वज्ञत्वम् अनीश्वरत्वं ज्ञेयत्वमिति च प्रसज्येत अतः जीवात्मानः परमेश्वराद्विभन्ना इत्येव समञ्जसं भाति। अथ च तेषां बुद्धिवृत्त्या प्रकाश्यत्वं कथितं चेदपि तत्प्रकाश्यत्वं नैवान्तःकरणसत्त्ववृत्त्या, प्रत्युत तमोभिभवादेव। एवञ्च चिदात्मा

जगत्प्रकाशकत्वेनैव सिद्ध्यति न तत्र परप्रकाशापेक्षा। मनोधर्माणां भ्रमादीनाञ्चाधिष्ठाता आत्मा इति बुद्धिवृत्तिषु ज्ञानसुखत्वव्यवहारः गौण एवेति स्वप्नेश्वराचार्याणां विवरणं दृश्यते।[148]

अत्र च नारायणतीर्थानां व्याख्यानाद् भेदः स्पष्टः।ब्रह्मणा सह जीवानां भेदोपकारकः पारमार्थिकः सम्बन्धो नास्तीति कारणेन ब्रह्म जीवेभ्यः पृथक् नास्ति इति 3–2–2 सूत्रेण प्रतिपादितम्। सूत्रमिदं व्याख्यायद्भिः नारायणतीर्थैः अद्वैतानुसारमेव विवरणं कृतम्। साधारणतः भेदस्य उपपादकः सम्बन्धः संयोगः, समवायः तादात्म्यं वा भवति तादृशः सम्बन्धो जीवब्रह्मणोर्मध्ये कोऽपि नास्तीत्यनेन कारणेन जीवब्रह्मणोरभेद एवार्थ इति नारायणतीर्थाः कथयित्वा भेदः काल्पनिकोऽभेद एव परमार्थ इति निरूपयन्ति।

तेषां मते सम्बन्धः संयोगः समवायः तादात्म्यरूपो वा। अतस्तादृश–सम्बन्धाभावे जीवात्मनो ब्रह्मणोऽभिन्ना एव अत्र च संयोगादिसम्बन्धः सम्बन्धशब्देन गृहीतः। स्वप्नेश्वरव्याख्याने तावत् सम्बन्धशब्देन द्रष्टृत्वदृश्यवादिकं स्वीकृतम्। अतः संबन्धस्वरूपे एव द्वयोर्मतभेदो दर्शयितुं शक्यः।[149]

भवदेवमिश्राणां व्याख्याने सूत्रतात्पर्यमन्यथा दर्शितम्। तदनुसारं सम्बन्धस्तावत् प्रकाश्यप्रकाशकभावलक्षणः। यदि जीवा ईश्वराभिन्नाः स्युस्तर्हि तेनैवाभेदेन स्वप्रकाश–ईश्वरप्रकाशविषयत्वं भवेद्। अर्थात् ते सर्वेऽपि जीवा ईश्वरप्रकाश्या भवन्ति अत एव श्रुतिरपि 'यस्य भासा सर्वमिदं विभातीति' प्रतिपादयति। एवञ्च जीवब्रह्मणोरभेदे बद्धमुक्तव्यवस्था न स्यात् इत्यपि शङ्का भवितुमर्हति तां शङ्कां परिहरद्भिः भवदेवमिश्रैः कथितं यद् भूयस्यो जीवोपाधिभूता अविद्याः

स्वीकृत्य यस्याविद्या नष्टा स मुक्त इति यस्यचाविनष्टा स बद्ध इति व्यवस्था कर्तुं शक्येति। एवञ्च सुखदुःखादिद्वन्द्वमपि समाधातुं शक्यम्। अतोऽविद्यानिष्ठमेव बन्धमोक्षादिकमिति भवदेवमिश्रा वर्णयन्ति। अत एव बन्धमोक्षादीनाम् अविद्यान्तर्गतमनोधर्मत्वमेव न तु आत्मधर्मत्वमिति भवदेवमिश्राणां स्पष्टीकरणं दृश्यत एवं सूत्रव्याख्यानप्रसङ्गे तैरद्वैतवेदान्तानुसारं व्याख्या कृता ततः परं वेदान्तानुसारमेव लिङ्गशरीरादिविवरणं कृतम्। एतस्यैव लिङ्गशरीरस्य अतिवाहिकं शरीरमित्यपि योगशास्त्रे व्यपदेशोऽस्तीति दर्शितम्। तदनन्तरं पञ्चकोशनिर्देशोऽपि कृतः। अस्मिन् सन्दर्भे भवदेवमिश्रैरद्वैतवेदान्तदृष्ट्यैव सर्वमपि चिन्तनं कृत्वाऽनुपहितं चैतन्यं परब्रह्मैव पारमार्थिकं सत्यमिति 'तत्त्वमसि' इति वाक्ये 'सोऽयं देवदत्त' इति वाक्य इव भागलक्षणया तदेव ब्रह्म लक्ष्यीकृत्य तात्पर्यं कथितमिति समुपवर्णितम्।[150]

एवञ्च त्रयाणामपि व्याख्यातृणां तुलनायां भवदेवमिश्राणां व्याख्या विपुला दृश्यते।

सूत्रम्—**न विकारिणस्तु जीवाः कारणविकारात्।।**[151]

स्वप्नेश्वरव्याख्याने अनुमानप्रमाणद्वारा आत्मनामविकारित्वं सुखादीनाञ्च मनोधर्मत्वं संसाधितम् तदित्थम् – सुखोपलब्धिः सकरणिका – इत्यनुमाने तादृशकरण—सम्बन्धस्तादात्म्येन वर्तते अतः पूर्वोक्तस्यानुमानस्य निराकरणार्थं स्वप्नेश्वराचार्यैरनुमानान्तरं प्रस्तुतम् –

सुखादयो नात्मविकाराः

आत्मनि प्रतीतत्वात्

गौरवात्

अर्थात् यतः सुखादय आत्मनि प्रतीयन्ते अतस्ते नात्मविकाराः आत्मविकारत्वेन स्वीकृतौ गौरवदोषोऽपि भवतीति तद्विचार एवञ्चा सुखी इत्याद्यपि मनोगतमेव आत्मसम्बन्धेन तत्रारोपितमिति ग्राह्यम्। सुषुप्तौ आत्मसत्त्वेऽपि सुखादीनामभावात् ते नात्मधर्मा इति निश्चेतुं शक्यमिति स्वप्नेश्वराचार्याः वर्णयन्ति।[152]

इत्यस्य सूत्रस्य व्याख्याने नारायणतीर्थैः जीवा विकारिणो न भवन्ति, विकारः सर्वोऽपि कारणस्य धर्म इति निरूपितम्। यतः सर्वेऽपि जीवाः विकारिणो ज्ञानेच्छादयस्तद्गुणाः जानामीच्छामि, सुखी – इत्यादिप्रत्ययात्।

इत्यनेनानुमानेन नैयायिकादयो जीवानां विकारित्वं प्रतिपादयन्ति। परन्तु सूत्रस्यास्याधारेण नारायणतीर्थाः मतमेतं निराकुर्वन्ति तदनुसारं जीवाः ज्ञानादिविकारवन्तो भवितुं नार्हन्ति यतः स च विकारः कारणगतः कामः सङ्कल्प इत्यादिशब्दैः सुखादीनां मनःपरिणामित्वं श्रुतौ कथितं मनसि कृत्य जीवानामन्तःकरणसम्बन्धादेव सुखादिकमिति। अतोऽद्वैत–सिद्धान्तानुसारं जीवानां विवर्ताधिष्ठानत्वं स्वीकृत्योपाधिकृतोऽयं भ्रम इति वक्तुं शक्यते तथाहि यथा सर्पभ्रमस्य विवर्तरूपस्य रज्जुरेवाधिष्ठानं तथा विवर्तस्य सर्वस्यापि जीव एव अधिष्ठानमिति संसूचितम् एवञ्च अद्वैतेऽप्यविद्याधिष्ठानं जीवो वा ब्रह्मवेति बहुधा चर्चितम्। विशिष्टाद्वैतेऽप्यद्वैतमतनिराकरणप्रसङ्गे सप्तविधाः अनुपपत्तीः दर्शयित्वा जीवो वा ब्रह्म वा अविद्यायावा अधिष्ठानं भवितुं नार्हतीति आश्रयानुपपत्तिद्वारा प्रतिपादितम् तदेतन्मतं निराकरिष्णुभिः नारायणतीर्थैः जीव एव विवर्तस्याधिष्ठानमिति सूचितम्

एवञ्चैकैव अन्तःकरणवृत्तिरन्तःकरणस्य परिणामरूपा जीवदृष्ट्या तु विवर्तरूपेति सिद्धान्तरहस्यं समाकलितम्।[153]

भवदेवमिश्राणां व्याख्यायां तावत् सुखदुःखादयो गुणविकारा इति साङ्ख्ययोगदर्शनबलेन दर्शितम्। सूत्रगतन्तु इति शब्दं हेत्वर्थकं मत्वा यत आत्मानो न विकारिणोऽतः सुखादय आत्मधर्मा न भवन्तीति अनुमानस्वरूपं दर्शितम्।[154]

एवं त्रयाणामपि तुलनायां नारायणतीर्थानां व्याख्यानम् अद्वैतमतावलम्बी सत् व्याख्यानान्तरापेक्षया सारल्यं वहतीति वक्तुं शक्यम्।

सूत्रम्–**अनन्यभक्त्या तदबुद्धिलयादत्यन्तम्।।**[155]

स्वप्नेश्वरभाष्ये सूत्रार्थः अनन्यभक्त्य जीवस्य अन्तःकरणस्य अत्यन्तं लये जाते ब्रह्मानन्दरूपा मुक्तिर्भवति इत्यस्ति। स एव अतो मनोलये ब्रह्मानन्दप्राप्तिर्भवतीति तात्पर्यं कथितम्। तस्य सिद्धत्वेन पुरुषार्थता न भवेदिति विचारो द्वाभ्यामपि व्याख्यातृभ्यां प्रस्तुतः। स्वप्नेश्वराचार्यै तावत् सिद्धेऽपि वस्तुनि इच्छाकृती भवितुमर्हत इति निरूपितम् परन्तु मीमांसाशास्त्रानुसारं कृत्यसाध्यज्ञानं प्रतिबन्धकं भवेदिति शङ्कायामुत्कटरागेण कृत्यसाध्यत्वमपि तिरोधाय प्रवर्तितमिति कारणेन प्रवृत्तिः समर्थिता अतः ब्रह्मानन्दावाप्तिः पुरुषार्थ एवेति तैः समर्थितम्।[156]

अनन्यभक्त्या इति सूत्रव्याख्याने नारायणतीर्थैः अनन्यभक्त्या जीवस्य अन्तःकरणस्य अत्यन्तं लये जाते ब्रह्मानन्दरूपा मुक्तिर्भवतीति स्वप्नेश्वराचार्यसदृशः सूत्रार्थः कथितः पुनश्च स्वरूपसिद्धस्य तस्य कथं प्रवृत्ति उद्देश्यत्वं भवेदिति शङ्कित्वा उपाधिलयात् तादृशब्रह्मप्राप्तिर्भवतीति स्पष्टीकृतम्। सूत्रगतोऽत्यन्तमिति शब्दोऽमुमेवार्थं बोधयतीति विवृतम्। नासदासीदित्याभिः श्रुतिभिः

प्रलयादावन्तःकरणस्य सत्ताऽङ्गीकृताऽन्यथा संसार एव न भवेदिति यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'**स एव तु कर्मानुस्मृतिविधिभ्यः**'[157] इत्यादिभिर्ब्रह्ममीमांसासूत्रैर्विरोधोऽपि भवेदिति विशदी–कृतम्।

अस्मिन्विषये भवदेवमिश्रव्याख्याने अधिकं वैलक्षण्यं न दृश्यते। परन्तु स्वप्नेश्वरभाष्यगतवाक्यानि कानिचित् पृथक्कृत्य षष्ठसूत्रस्य व्याख्याने योजितानि यच्च सूत्रं तत्पूर्ववर्ति ग्रन्थद्वयेऽपि नोपलभ्यते।

**सूत्रम्–आयुश्चिरमितरेषान्तु हानिरनास्पदत्वात्।।**[158]

स्वप्नेश्वरभाष्यानुसारं परभक्तौ सत्यामपि मुक्तिप्रतिबन्धकं जीवनदृष्टमात्रमेव। इतरेषां धर्माधर्माणां प्रारब्धनाशे भोगास्पदस्य अभावात् बुद्धिभोगाभावस्तेन नानिर्मोक्षप्रसङ्ग इति सूत्रार्थो भवति।[159]

आयुश्चिरमितरेषामित्यस्य सूत्रस्य व्याख्याने वैलक्षण्यं दृश्यते। नारायणतीर्थानामभिप्राये अनन्य भक्तस्य आयुश्चिरं भवतीतरेषां सञ्चित–अनागतकर्मणां हानिर्भवति यतः फलरूपलक्षणस्य तत्राभावो वर्तत इति सूत्रार्थः। तेन प्रारब्ध अपरिसमाप्तिरेव भक्तस्य कैवल्ये विलम्ब इति सूत्रार्थो निष्पद्यत अत एव अनन्यभक्तस्य मोक्षे कियान् विलम्ब इति प्रश्नमुपस्थाप्य नारायणतीर्थैः सूत्रावतरणिका रचिता।[160]

भवदेवमिश्राणां व्याख्याने अनन्यभक्तौ सत्यामपि ये विदेहमुक्तिं न प्राप्नुवन्ति तेषाम् आयुश्चिरं भवति। परन्तु दुःखत्रयादिहानिस्तु भवत्येव यतस्तस्यामवस्थायां दुःखहेतोः दुर्वासनादेराश्रयो न भवतीति सूत्रार्थो भवति।[161]

त्रयाणामपि व्याख्यानानां तुलनायां महद्वैलक्षण्यं दृश्यते। नारायणतीर्थानां मते आयुश्चिरमिति सूत्रभागस्य प्रारब्धमित्यर्थः

इतरेषामिति शब्दस्य 'अनागत सञ्चितकर्मणाम्' इत्यर्थः। अस्मिन् व्याख्याने 'हानिं' शब्दस्य 'इतरेषाम्' इत्यनेन शब्देन सह सम्बन्धो दृश्यते, हानि शब्दस्य 'अश्लेषविनाशौं' इत्यर्थो गृहीतोऽनास्पदत्वाद् इति हेतुश्च दर्शितः। एवञ्च आयुश्चिरम् इति एकः सूत्रभाग, इतरेषान्तु हानिरित्यपरोऽनास्पदत्वादिति च चरमः।

स्वप्नेश्वरभाष्ये आयुश्चिरमित्यस्य प्रारब्धमात्रमेव विलम्ब इत्यर्थ इतरेषामित्यस्य च धर्माधर्माणामित्यर्थः स्वीकृतः 'हानिं' शब्दस्य धर्माधर्माणामितिशब्देन सह अन्वये कृते धर्माधर्माणामप्यभावो दृश्यते, अनास्पदत्वादित्यस्य च भोगाश्रयाभावादित्यर्थो दर्शितः। एवञ्च धर्माधर्माणामपूर्वाणामपि भोगेनैव लये मोक्षो न स्यादित्यवतरणिकायां या शङ्का दर्शिता सा चानास्पदत्वादिति हेतुना समाहिता। एवञ्च परम्परया ज्ञानेनैव कर्मक्षय इति सूत्रार्थः।

भवदेवमिश्रव्याख्याने तावद् सूत्रान्वयः अन्यादृश एव उपलभ्यते। अत्र इतरेषामायुश्चिरमिति एकः सूत्रभागो हानिरनास्पदत्वादिति चरमो भाग एवमन्वये कृत इतरेषामायुश्चिरमित्यस्य सूत्रभागस्यार्थः, 'अनन्यभक्तौ सत्यामपि ये विदेहमुक्तिं न प्राप्नुवन्ति तेषामायुश्चिरमिति भवति। एवं हानिस्तु इत्यस्य 'दुःखत्रयादि हानिस्तु' इत्यर्थो भवति। अनास्पदत्वादित्यस्य च दुर्वासनाद्यनाश्रयत्वादित्यर्थो भवति। एवञ्चानन्यभक्तौ सत्यामपि ये विदेहमुक्तिं न प्राप्नुवन्ति तावदेवायुर्विदेहमुक्तिविलम्बबीजं भवत्येषैवजीवन्मुक्तावस्था। अस्यामपि स्थितौ दुर्वासनादीनामाश्रयो न भवतीति कारणेन तेषामपि दुःखत्रयादिहानिः तु भवत्येवेति सूत्रतात्पर्यं सिद्ध्यति।

एवं सूत्रस्यास्य व्याख्याने व्याख्यातॄणां वैलक्षण्यन्तु स्पष्टं सूत्रगतशब्दानां विभिन्नरीत्यान्वयं कृत्वा स्वाभिप्रेतोऽर्थः संसाधितः। नारायणतीर्थाःनां व्याख्यानं श्रुतिस्मृतिप्रमाणसिद्धं दृश्यते। अनन्यभक्तस्य जीवन्मुक्तावस्थायां जीवनादृष्टनामकमायुं चिरं भवति अनागतसञ्चितकर्मणामश्लेशविनाशौ भवतः यतस्तत्र फलरूपलक्षण आश्रयो न भवति। अत्र **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति**[162]प्रमाणम्। अत्र अश्लेषविनाशौ इत्यस्यापि अर्थः स्वसमानाधिकरणफलाजनकत्वम् अर्थात् सञ्चितअनागतकर्मभिः अश्लेषविनाशौ न भवतः। अर्थात् अनागतस्याश्लेषः सञ्चितस्य च विनाशो भवतीति भावः। तेषु कर्मसु सत्सु अपि तत् तत्कर्मजन्यं फलं न भवतीति नारायणतीर्थाः स्पष्टयन्ति। प्रारब्धन्तु नष्टं भवतीति शास्त्रप्रमाणं दर्शितम्। 'ज्ञानाग्निः सर्व कर्माणि' इति गीताश्लोकस्थसर्वकर्मपदस्य प्रारब्धेतरकर्मपरत्वमेव। यतः प्रारब्धकर्म भोगं विना न नश्यतीति शास्त्रप्रवादोऽतः प्रारब्धकर्म परिसमाप्तिपर्यन्तमेव भक्तस्य मोक्षे विलम्ब इति सूत्राशयं नारायणतीर्थाः व्याकुर्वन्।

सूत्रम्—**संसृतिरेषामभक्तेः स्यान्नाज्ञानात्करणत्वासिद्धेः।**[163]

संसृतिरेषामभक्तेरिति सूत्रस्य व्याख्याने त्रयाणामपि व्याख्यातॄणां नाधिकं मतभेदो दृश्यते। एतेषां जीवानां भक्त्यभावकारणेन संसारो भवति स च संसारः केवलादज्ञानात् न भवति यतोऽज्ञानस्यैव संसारकारणत्वकल्पनायासिद्धदोषो भवति अर्थात् केवलस्य कारणत्वमसिद्धमिति सूत्रार्थः। अत्र येषां भक्तिर्नास्ति तेषां संसारो भवतीति कथयित्वा अज्ञानस्य संसारकारणत्वं निराकृतम् इत्यादौ कथयित्वा 'जीवन्मुक्तिः पराभक्तिः तदसिद्धिस्तु असंसृतिं' रिति

स्वप्नेश्वराचार्यैः संसारकारणं भक्तिराहित्यमिति कथयित्वा विष्णुपुराणप्रमाणेन तत् समर्थितम्।[164]

भवदेवमिश्रव्याख्याने तावत् संसारः कस्माद् भवत्यभक्तेरज्ञानात्कर्मणो वेति विकल्पे सूत्रमाध्यमेन सिद्धान्तो दर्शितस्तदनुसारम् अज्ञानात् कर्मणो वा संसारो न भवति, यतोऽज्ञानस्य कर्मणो वा संसारं प्रति कारणमसिद्धम् इति सूत्राशयः कथितस्तदनन्तरं कारणत्वासिद्धेरिति हेतुं विवरीतुम् अन्यथासिद्धिलक्षणमुदाहरणञ्च स्पष्टीकृतम्।[165] एवञ्च भक्त्या परमेश्वरतोषोऽभक्त्या परमेश्वरस्य कोपश्च भवतस्ततश्च बन्धमोक्षौ

भवत इति कारणेनाज्ञानकर्मादिकं ज्ञानधर्मादिकञ्च मोक्षनियतपूर्ववर्त्यप्य अन्यथासिद्धम् इति हेतोः कारणत्वं नास्तीति भावः स्वप्नेश्वरव्याख्याने दर्शितः।

नारायणतीर्थानां व्याख्याने तावत् अभक्तेरपि संसारो भवति न अज्ञानमात्रात् इति भावकथनेन अज्ञानस्यापि संसारहेतुत्वं दर्शितम् अत एवं वक्तुं शक्यते यत् स्वप्नेश्वरभवदेवमिश्र व्याख्यानयोः समाकलनेन अज्ञानस्य कर्मणो वा संसारं प्रति कारणत्वं नास्तीत्येतावज्ज्ञायते परन्तु नारायणतीर्थानां मते 'अपि' शब्दयोजनेन जीवानां संसारोऽज्ञानमात्रादेव नाभक्तेरपि भवतीत्य अज्ञानस्यापि कारणत्वं स्वीकृतं दृश्यते यद् व्याख्यानान्तरे न दृश्यते इदमेकं वैलक्षण्यम्। अपि च नारायणतीर्थाःनां व्याख्याने 'अज्ञानादर्थसृष्टिः कथमिति' प्रश्नमुपस्थाप्याद्वैतवेदान्तानुसारेण तद् समाहितम् तदित्थम् –

अज्ञानादपि जीवानां संसारो भवतीति यदुक्तं तत्राज्ञानात् न कुत्राप्यर्थसृष्टिर्दृष्टेति शङकितम्। शङ्कामिमां परिहरद्भिः

नारायणतीर्थैः समाहितं यद् वस्तुतोऽभक्तेरप्यर्थसृष्टिः न दृश्यते तर्ह्युभयत्रापि समं स्वरूपं भवेत् तथाप्यज्ञानात् कथं वा अर्थसृष्टिरिति नारायणतीर्थैः अद्वैतवेदान्तानुसारं स्पष्टं विवृणितम्। तेषां मतानुसारं सृष्टिरजतादिसृष्टिः स्वप्नसृष्टिश्च अज्ञानाद्भवतः। 'न तत्र रथाः रथयोगाः' इत्यादि श्रुतयस्तत्र प्रमाणम्। नैयायिकैरेतादृशी सृष्टिः अन्यथाख्यातिरिति कथिता। परन्तु श्रुतिप्रमाणेन वेदान्तदर्शनानुसारम् एतादृशस्थले अन्यथाख्यातिर्नास्ति, अनिर्वचनीयख्यातिरेव।

अस्य व्याख्यानस्यद्वारा नारायणतीर्थाः सूत्रार्थमन्यथा व्याख्यान्ति यतः सूत्रे अदृष्टमपि पदं योजयित्वा सूत्रतात्पर्यम् अद्वैतसिद्धान्तरीत्या दर्शयन्ति। अभक्तेः स्यात् न अज्ञानात् इत्येतावदेव सूत्रे दृश्यत अत्र नारायणतीर्थैः पदद्वयं योजितम्। तथा हि अभक्तेः स्यात् इत्यत्र अभक्तेरपि स्यात् इति वाक्यं कृतं, न अज्ञानात् इत्यत्र न अज्ञानमात्रात् इति वाक्यं कृतं तथा च सूत्रादृष्टपदयोजनेन स्वाभिष्टोऽर्थस्तैरत्र दर्शितः तदर्थञ्च अज्ञानात् कथं वाऽर्थसृष्टिर्भवतीति दर्शयितुम् अद्वैतवेदान्तरीत्या अनिर्वचनीयख्यातिप्रसङ्गः निरूपितः।[166]

सूत्रम्—**त्रीण्येषां नेत्राणिशब्दलिङ्गाक्षभेदाद्रुद्रवत्।**[167]

त्रीण्येतानि नेत्राणीत्यादि सूत्रस्य व्याख्याने प्रमाणचर्चा काचित् कृता। यथा रुद्रस्य त्रीणि नेत्राणि भवन्ति तथा जीवानाम् अर्थप्रमापकानि प्रमाणानि त्रीण्येव भवन्ति, तानि च शब्दानुमानप्रत्यक्षनामकानि इति सूत्रार्थः।

अस्य व्याख्याने शब्दानुमानप्रत्यक्षभेदात् त्रीण्येव प्रमाणानीत्यर्थं कथयित्वा सोदाहरणं तावदेव स्पष्टीकृतं त्रिभिरपि व्याख्यातृभिः। त्रीण्येव प्रमाणानि नाधिकानि न न्यूनानि चेति स्वप्नेश्वराचार्यैः नारायणतीर्थैश्च

विचारितं तथैव प्रमाणोद्देशे क्रमस्य समर्थनमपि कृतम्। स्वप्नेश्वराचार्यानुसारम् अलौकिकभक्तेः शब्दसाध्यत्वमस्तीति दर्शयितुं शब्दप्रमाणस्य प्रथममुल्लेखः।[168] परन्तु नारायणतीर्थानां मते शब्द एव श्रुतिरूपोऽधिकप्रमाणमित्येतत् कारणेन शब्दस्य प्रथमोल्लेखः। ततः परम् अनुमानप्रमाणकथने स्वप्नेश्वराचार्यैः कथ्यते यद् भक्तिसंप्रदाये सत्कार्यवादः स्वीकृत इति कारणेनानुमानमपि शब्दानन्तरं कथितमिति व्याख्यातम्। नारायणतीर्थास्तावद् अनुमानप्रमाणं शब्दप्रमाणमनुसरतीति कारणेन शब्दानन्तरम् अनुमानस्य निर्देशः। ततश्च तृतीयप्रमाणरूपेण प्रत्यक्षप्रमाणकथने को वा हेतुरिति जिज्ञासायामनुमानस्य तर्कशुद्धस्य प्रत्यक्षप्रमाणत्वादनुमानानन्तरं प्रत्यक्षनिर्देश इति कथितम्। एवं नारायणतीर्थाः स्वशब्दैः प्रमाणक्रमं समर्थयामासुरतस्त्रीण्यपि प्रमाणानीति सिद्ध्यति। इतोऽपि अधिकानि न भवन्तीति सूचयितुम् उपमानादिप्रमाणानाम् अन्तर्भावम् उक्तेषु प्रमाणेषु कृत्वा प्रमाणानां त्रैविध्यं साधितम्।[169]

भवदेवमिश्रव्याख्याने तावत् प्रमाणानां न्यूनाधिकचर्चा न कृता प्रत्युत त्रयाणामपि प्रमाणानां सलक्षणं सोदाहरणञ्च निरूपितम्। तत्सर्वथा तत्तत् शास्त्रानुसारमेव दृश्यते।[170]

नारायणतीर्थैःशास्त्रान्तरसिद्धानि उपमानादिप्रमाणानि अत्रोक्ते शब्दादिप्रमाणत्रये अन्तर्भवन्तीति संक्षेपेणोक्तम्। अत्रोपमानस्य कथं वाऽनुमानेऽन्तर्भाव इति स्वप्नेश्वराचार्याः स्पष्टीचक्रुस्तदनुसारम् उपमानप्रमाणं केवलं शक्तिग्रहस्य कृते। यथोक्तं शक्तिग्रहं 'व्याकरणोपमानकोषाप्तवाक्यादित्यादिं' (मुक्तावली शब्दखण्ड)। तच्च शक्तिज्ञानं सामान्यतो दृष्टानुमानेनापि भवति क्वचित् प्रसिद्ध–पद

सन्निधितो भवतीति क्वचित् मनसापि भवतीत्यत उपमानं न पृथक्प्रमाणमित्युक्तम्। भवदेवमिश्राः सम्प्रदाय इत्युक्त्वा एतन्मतं दर्शयित्वा उपमानस्य पृथक् प्रमाणत्वं दर्शितवन्तः। तथाहि उपमानं हि साधर्म्येण वैधर्म्येण च भवति अत एव साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः इति नैयायिकाः यथा साधर्म्येण ईश्वरे विश्वस्याभेदः वैधर्म्येण च भेदो ज्ञायते तस्मात् उपमानमपि प्रमाणमेव इत्युक्त्वा तदेव निदिध्यासनमिति समाहृतम्। परन्तु नारायणतीर्थानां व्याख्यानान्तरतः निदिध्यासनस्य पृथगेव स्वरूपं ज्ञायते। अत उपमानस्य निदिध्यासनत्वे विप्रतिपत्तिर्दृश्यते।

सूत्रम्—**आविस्तिरोभावविकाशाः।।**[171]

अस्य सूत्रस्य व्याख्याने व्याख्यानत्रयावलोकनेन ज्ञायते यत् त्रयाणामपि व्याख्याने विवक्षितं किञ्चिदन्यादृशमेव। जन्यानां पदार्थानाम् आविर्भावः तिरोभावः विकासश्च भवन्तीति तत्सर्वं धात्वर्थक्रियाफलयोः सम्बन्धप्रतिपादनात् भवतीति च सूत्रार्थः। अत्र आविर्भावतिरोभावविकासाः इति नारायणतीर्थाः सम्मते पाठे दृश्यते। जन्मनाशस्थितयः एतेन अभिप्रेताः भवन्ति। स्वप्नेश्वरव्याख्याने भवदेवमिश्रव्याख्याने च **आविर्भावतिरोभाव—विकाराः**इति पाठः स्वीकृतः।[172] तथैव सूत्रमिदं व्याख्यातम्।

सर्वेष्वेव व्याख्यानेषु क्रियाफलसंयोगविचारः विशदतया कृतः। तथाहि 'घटं करोति', 'घटं नाशयति' इत्यत्र 'कृ' धात्वर्थः क्रियाफलरूपेण उत्पत्तिः नश् धात्वर्थक्रियाफलरूपेण च निवृत्तिः प्रदर्श्यते। सम्बन्धश्च असतो न भवतीति सत एव तत्सम्बन्धः दर्शनीयः। नारायणतीर्थानां व्याख्यानानुसारं क्रियाश्रयत्वविचारः अत्यन्तं विपुलः। भवति, नश्यति

इत्यादावपि क्रियाश्रयत्वं प्रतीयते इति तैरुक्तम्। अत एव व्याकरणशास्त्रेऽपि स्वभवनानुकूलव्यापारो 'भू' धातोरर्थः 'घटो भवती'त्यत्र तादृशभवनानुकूलाश्रयत्वेन घटस्य कर्तृत्वं व्यापाराश्रयः कर्तेति व्याकरणसिद्धान्तानुसारं भवति। तेन च प्रातिपदिकार्थसूत्रेण प्रथमा विभक्तिर्भवति। 'नश्यति' इत्यत्र 'णश्' धातुरदर्शनार्थकः। स च नाशः स्व–अदर्शनानुकूल–सामग्री समवधानमिति व्याकरण–शास्त्रानुसारं कथ्यते अतो घटो नश्यतीत्यत्र घटादर्शनरूपफलानुकूल–सामग्रीसमवधानमेवार्थः। अतः नारायण–तीर्थाः सत एव वस्तुनः भवति नश्यति इत्यादौ क्रियाश्रयत्वं प्रतीयते इत्यवोचन्। तदनुसारं भवतीत्यत्राद्यक्षणसम्बन्ध इत्यर्थो न भवति यतः आद्यत्वस्य निर्वचनमेव न शक्यं तथैव नश्यतीत्यत्र नाशप्रतियोगित्वमपि नार्थ इति स्वमतमुपस्थापयन्ति। भवतीत्यत्र स्वाधिकरणक्षणवृत्तिः प्रागभावप्रतियोगित्वमाद्यत्वमिति वक्तुं शक्यते वेति शङ्का भवितुमर्हति तत्र नारायणतीर्थानां मते तावद् घटो भवतीत्यत्र अनागतादिकाले घटाद्यभावेन घटादेः प्रागभाव–प्रतियोगित्वादिधर्मः न सम्भवति अतः क्रियाश्रयत्वमेव भवतिनश्यतीत्यादौ ज्ञेयमिति तेषामाशयः। अयमेव दोषः प्रतियोगित्वस्य प्रतियोगीस्वरूवत्वेऽपि भवति। प्रतियोगिस्याभावमात्र–स्वरूपत्वे घटाद्यभावः पटाद्यभावोऽपि भवितुमर्हति अतो नश्यतीत्यत्र नाशप्रतियोगित्वं नार्थोऽतोऽसतः कथञ्चिदपि विशेषकत्वासम्भवेन सत एव कार्यस्य प्रागभावप्रतियोगित्वादयो धर्मा क्तव्याः। ध्वंसोऽतीतः, प्रागभावश्चानागत इति कारणेन ते द्वे अवस्थे वर्तमानवत् भावात्मिक एव। अतो 'घटोऽतीतः, 'घटो वर्तमानः', 'घटो भविष्यतीति च ज्ञानानां तुल्यरूपतैवोचिता। एवं नारायणतीर्थाः सर्वेषामपि वर्तमान–अतीत–

अनागतानां भावरूपत्वं स्वीकुर्वन्ति। अन्योन्याभाव–अत्यन्ताभावयोः केवलाधिकरणस्वरूपञ्च मन्यन्ते।

अस्मिन्विषये काचिच्छङ्का भवितुमर्हति, अस्मिन्मते कार्यस्याभिव्यक्तिः सती असती वा। कार्यस्य अभिव्यक्तिः सती इति उच्यते चेत् तदर्थं कारणव्यापारः विफलो भवेत् अपि च तद्व्यापाराद् प्रागपि कार्यस्याभिव्यक्तिर्भवेत् तथैव अभिव्यक्तिरसतीत्युच्यते चेत् सत्कागर्यवादस्य क्षतिर्भवेत् इत्येतां शङ्कां नारायणतीर्थाः स्वव्याख्याने समादधुः। तदित्थम् –

अभिव्यक्तेरपि वर्तमानायाः अवस्थायाः प्राक् असत्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारोऽपेक्ष्यते। सर्वकार्याणि च कारणव्यापारात् प्राग् प्रकारभेदेन सन्ति असन्ति च भवितुमर्हन्ति अतोभिव्यक्तिरपि सतामेव कार्याणाम् इति निष्कर्षः नारायणतीर्थैः कथितः। एवञ्चेत् कार्यस्य भेदादेरपि पूर्वमसत्वमेव भवेत्, अभिव्यक्त्याख्य–अवस्थाकल्पनेन गौरवदोषोऽपि भवेदिति शङ्का क्रियते चेत् नारायणतीर्थानां मतानुसारं सा शङ्का न साधीयसी, श्रुत्यनुसारमपि अव्यक्तावस्थया सतामेव कार्याणाम् अभिव्यक्तिमात्रं भवतीति सिध्यति। एवं घटस्य वर्तमानावस्थैव अभिव्यक्तिस्तादृश–अभिव्यक्ति–अभाव एव घटस्य अतीतावस्था अनागतावस्था चेति काचन दिक् नारायणतीर्थैः निदर्शिता। एवञ्च तिरोभावशब्दस्य सूक्ष्मतया कारणेषु अविभागः कार्यस्य अतीतावस्थारूपो लय एव इत्यर्थो यदि स लय आत्यन्तिकस्तर्हि तस्य लीनस्य न पुनरुत्पत्तिरिति रीत्या सूत्रार्थः नारायणतीर्थैः विपुलतया वर्णितः। ततश्च एतत् सर्वकथनं कारणेन ईश्वरेण कार्यस्याभेदस्य सम्पत्तये आवश्यकमिति कथयित्वा तस्मिन् सत्येव ब्रह्मज्ञानं ततश्च 'यस्मिन्

विज्ञाते सर्वमिदं विज्ञातं भवतीतिं श्रुत्यनुसारं सर्वविज्ञानेन वैराग्यादनन्यभक्त्या भगवत्प्राप्तिस्सम्भवतीति सर्वप्रस्थानसमन्वय–पर्वकं नारायणतीर्थैः भक्तिसम्प्रदायः समुपस्थापित इति तेषां व्याख्यानस्य वैलक्षण्यं वरीवर्ति।[173]

भवदेवमिश्राणां व्याख्याने तावदेतत् सर्वं मनसि निधायाविर्भावतिरोभावृद्धिहानादयोविकारा भवन्तीत्यादिकं नारायणतीर्थानां व्याख्यानानुसारमेव विवृतम्। अतः सत एव उत्पत्त्यादयो भवन्तीति कथितम्। तदनन्तरञ्च अभिनवमतमपि विपुलतया दर्शितं ततश्च विभिन्नदार्शनिकमतानि दर्शयित्वा परमार्थतस्तु श्रीभगवान् स्वयमेव स्वशक्तितः स्वेच्छानुरूपं प्रति दिक् अन्तर्बहिश्च सताण्डवम् अतिप्रमोदात् नानदीतीति समाहृतम्।[174]

अत्र सत एव क्रियाफलसंयोगात् आविर्भावादयो भवन्तीति विषये त्रयाणामपि व्याख्यातृणां मतैक्यं दृश्यते। नारायणतीर्थानान्तु क्रियाफलसम्बन्धविचारे महतीरुचिर्दृश्यते। एवञ्च विभिन्नानां शास्त्राणां विपुलवैदुष्येणनारायणतीर्थानां व्याख्यानं सर्वोपरि रारज्यत इति वक्तुं शक्यते।

————

## संदर्भाः


1. शा.भ.सू. 1—1—1
2. स्वप्ने. भा. पृ.3
3. भ.च. पृ. 3
4. तत्रैव पृ. 4
5. अभि.भा. पृ. 2
6. शा.भ.सू. 1—1—2
7. वि.पु. 1—20—17
8. यो.सू. 2—7
9. स्वप्ने. भा पृ. 3,4
10. तत्रैव पृ. 5
11. भ.च. पृ. 4
12. वि.पु. 1—20—17
13. तत्रैव 1—20—16
14. भ.च. पृ. 5
15. भ.च. पृ. 5
16. नाट्यशास्त्रम् 6 अध्यायः
17. भ.च. पृ. 5
18. तत्रैव पृ. 6
19. तत्रैव
20. तत्रैव पृ. 10
21. तत्रैव पृ. 23
22. तत्रैव पृ. 23,24,25
23. शा.भ.सू. 1—1—3

24. स्वप्ने. भा. पृ. 5
25. अभि.भा. पृ. 8
26. शा.भ.सू. 1—1—8
27. स्वप्ने. भा. पृ. 9
28. भ.च. पृ. 56
29. अभि.भा. पृ. 13
30. शा.भ.सू. 1—2—6
31. स्वप्ने. भा. पृ. 13
32. भ.च. पृ. 63,64
33. अभि.भा. पृ. 20,21
34. शा.भ.सू. 1—2—7
35. स्वप्ने. भा. पृ. 14
36. भ.च. पृ. 64,65
37. शा.भ.सू. 1—2—8
38. श्वेता. उप. 6—23
39. भ.च. पृ. 65
40. अभि.भा. पृ. 23
41. शा.भ.सू. 1—2—16
42. भ.च. स्वप्ने. भा. पृ. 16
43. भ.च. पृ. 78
44. तत्रैव पृ. 79
45. अभि.भा. पृ. 25
46. शा.भ.सू. 1—2—19
47. स्वप्ने. भा. पृ. 17

48. भ.च. पृ. 80
49. अभि.भा. पृ. 27
50. शा.भ.सू. 2—1—2
51. स्वप्ने. भा. पृ. 18
52. भ.च. पृ. 82
53. शा.भ.सू. 2—1—3
54. स्वप्ने. भा. पृ. 18
55. भ.च. पृ. 82
56. अभि.भा. पृ. 29
57. शा.भ.सू. 2—2—1
58. भ.गी. 7—17
59. तत्रैव 7—23
60. तत्रैव 9—29
61. तत्रैव 9—13
62. तत्रैव 9—29
63. स्वप्ने. भा. पृ. 31
64 भ.च. पृ. 116,117
65. भ.गी. 9—13
66. अभि.भा. पृ. 45
67. शा.भ.सू. 2—2—10
68. स्वप्ने. भा. पृ. 36
69. वे.सू. 4—1—11
70. भ.च. पृ. 130,131
71. अभि.भा. पृ. 49,50

72. शा.भ.सू. 2—2—15
73. भ.च. पृ. 134,135
74. शा.भ.सू. 2—2—16
75. स्वप्ने. भा. पृ. 39
76. भ.च. पृ. 135
77. श्रीमद् 10—29—11
78. श्रीमद् 6—1—19
79. भ.च. पृ. 136
80. शा.भ.सू. 2—2—21
81. भ.गी. 18—66
82. स्वप्ने. भा. पृ. 44
83. भ.गी. 18—2
84. तत्रैव श्लोक 8
85. तत्रैव 9—30,31नृसिंह पुराण 8—28,29
86. भ.च. पृ. 146 भ.गी. 4—36
87. शा.भ.सू. 2—2—23
88. स्वप्ने. भा. पृ. 45,46
89. भ.च. पृ. 150,151
90. तत्रैव
91. तत्रैव पृ. 152
92. शा.भ.सू. 2—2—24
93. अभि.भा. पृ. 57
94. शा.भ.सू. 2—2—25
95. स्वप्ने. भा. पृ. 47

96. तत्रैव

97. तत्रैव

98. भ.च. पृ. 167,168

99. अभि.भा. पृ. 57

100. शा.भ.सू. 2—2—26

101. स्वप्ने. भा. पृ. 47

102. तत्रैव

103. तत्रैव

104. तत्रैव

105. तत्रैव

106. ब्र.सू. 1—3—26

107. भ.च. पृ. 171

108. यो.सू. 4—7

109. भ.च. पृ. 172

110. तत्रैव

111. तत्रैव

112. तत्रैव 173

113. तत्रैव 174

114. अभि.भा. पृ. 57,58

115. शा.भ.सू. 2—2—27

116. स्वप्ने. भा. पृ. 48

117. भ.गी. 9—30, 31, भ.च.पृ. 177

118. भ.च. पृ. 177

119. भ.च. पृ. 177,178

120. अभि.भा. पृ. 58
121. शा.भ.सू. 2–2–28
122. स्वप्ने. भा. पृ. 49
123. भ.च. पृ. 178,179
124. अभि.भा. पृ. 58
125. तत्रैव पृ. 59
126. शा.भ.सू. 2–2–29
127. स्वप्ने. भा. पृ. 49
128. भ.च. पृ. 180
129. तत्रैव पृ. 181
130. तत्रैव
131. तत्रैव
132. तत्रैव पृ. 183
133. अभि.भा. पृ. 59,60
134. शा.भ.सू. 3–1–5
135. स्वप्ने. भा. पृ. 53
136. भ.च. पृ. 194,195
137. शा.भ.सू. 3–1–6
138. स्वप्ने. भा. पृ. 53
139. भ.गी. 18–3
140. तत्रैव 18–5
141. भ.च. पृ. 196,197
142. शा.भ.सू. 3–2–1
143. स्वप्ने. भा. पृ. 55

144. भ.च. पृ. 202

145. तत्रैवपृ. 202,203

146. अभि.भा. पृ. 70

147. शा.भ.सू. 3—2—2

148. स्वप्ने. भा. पृ. 56

149. भ.च. पृ. 203

150. अभि.भा. पृ. 70,71,72

151. शा.भ.सू. 3—2—3

152. स्वप्ने. भा. पृ. 57

153. भ.च. पृ. 203

154. अभि.भा. पृ. 72

155. शा.भ.सू. 3—2—4

156. स्वप्ने. भा. पृ. 57,58

157. भ.च. पृ. 203,204

158. शा.भ.सू. 3—2—5

159. स्वप्ने. भा. पृ. 58

160. भ.च. पृ. 204,205

161. अभि.भा. पृ. 73,74

162. वे.सू. 41—1—3

163. शा.भ.सू. 3—2—6

164. स्वप्ने. भा. पृ. 58,59

165. अभि.भा. पृ. 75

166. भ.च. पृ. 205,206

167. शा.भ.सू. 3—2—7

168. स्वप्ने. भा. पृ. 59,60

169. भ.च. पृ. 206

170. अभि.भा. पृ. 76,77

171. शा.भ.सू. 3–2–8

172. स्वप्ने. भा. पृ. 60

अभि.भा. पृ. 78

173. भ.च. पृ. 206,207,208

174. अभि.भा. पृ. 78,79,80

————

# उपसंहारः

## नारायणतीर्थानां भक्तिचन्द्रिकायाः योगदानम्

अष्टादशशतककाले काशीमलङ्कृतवत्सु विद्वद्वरेषु श्रीमतां नारायणतीर्थानां नाम सर्वदा प्रथमग्राह्यं भवति। वाचस्पतिमिश्रवत् सर्वतन्त्रस्वतन्त्रा इमे सांख्य–योग–न्याय–वैशेषिक–मीमांसा–वेदान्त–भक्तिमुख्येषु शास्त्रेषु अमूल्यानि व्याख्यानानि विरच्य शास्त्रसम्प्रदायं परिरक्षितवन्तः। सिद्धान्तबिन्दोर्नारायणीति व्याख्याने यावदर्थगाम्भीर्यं प्रदर्शितं तदनितरसाधारणम्। शाण्डिल्यभक्तिसूत्राणां भक्तिचन्द्रिकानाम्नी व्याख्याऽपि स्वरूपसुन्दरी सती भक्तिसंप्रदाये वैलक्षण्यं वहति।

नारायणतीर्थाः आन्ध्रदेशे लब्धजन्मानः वाराणसीमधिवसन्तः शास्त्राध्ययनं व्यधुरिति ततश्च महदेव शास्त्रवाङ्मयमाविरभाव –यन्निति च ज्ञायते। तेषां कालः निश्चयेन 1600.1690 इति विद्यते। वासुदेवानन्दतीर्थाः रामगोविन्दतीर्थाश्च ऐतेषां गुरवः। गौडब्रह्मानन्दतीर्थाः माहेश्वरतीर्थादयश्च शिष्याः। तेषां बुद्धिवैशद्यवशात् विविधशास्त्रविषयकाः चतुर्दश संख्याकाः ग्रन्थाः तै रचिताः। एवं द्वितीयाध्याये नारायणतीर्थानां जीवनं कृतीश्चाधिकृत्य अध्ययनं कृत्वा निष्कर्षः उपस्थापितः।

नारायणतीर्थैः शाण्डिल्यभक्तिसूत्राणां व्याख्यानरूपेण भक्तिचन्द्रिका रचिता। भक्तिशास्त्रग्रन्थेषु शाण्डिल्यभक्तिसूत्राणां नारदभक्ति–सूत्राणाञ्च प्रसिद्धिर्वर्तते। भक्तिचन्द्रिकायाः मूलग्रन्थस्य शाण्डिल्यभक्तिसूत्रग्रन्थस्य समग्रः परिचयः तृतीयाध्यायेकृतः। तेन सह समग्रस्य भक्तिसाहित्यस्यापि किञ्चिदवलोकनंकृतम्। भक्तिचन्द्रिकया

सह इतरव्याख्यानानाञ्च परिचयोऽपि अत्र दत्तः। एवं तृतीयाध्याये भक्तिसाहित्यं तत्र शाण्डिल्यभक्तिसूत्राणि, तेषाञ्च व्याख्यानानीति सम्यग् विवेचितम्।

भक्तिचन्द्रिकाव्याख्यानमिति बहुविषयस्पर्शी प्रमाणग्रन्थः। अत्र बहवो विषयाः प्रसङ्गवशात् चर्चिताः। सिद्धान्ताः कृताः।एतेषामध्ययनेन च ज्ञायते यत् नारायणतीर्थाः स्वव्याख्यानमाध्यमेन बहूनां शास्त्रसिद्धान्तानां निष्कर्षमत्र दर्शयामासुरिति।

अन्यानुरक्तित्यागपूर्वकं भगवति परानुरक्तिरेव भक्तिरिति सा परमप्रेमरूपा स्वयं पुमर्थेति। ज्ञानं योगः इत्यादिकं भक्तेरेव साधनं भवतीति च व्याख्यानेऽस्मिन् चर्चित्वा निरूपितम्। नारायणतीर्थास्तावदस्याः भक्तेः श्रुतिप्रामाण्यमपि दर्शयित्वा भक्तेः विभावादिकमपि प्रदर्श्य भक्ते रसत्वं प्रतिपादयामासुः। एकस्यैव परमेश्वरस्य लीलावतारा ब्रह्मविष्णुरुद्रादय इति दर्शितम्।

भक्तौ सर्वोऽपि अधिकारी भवतीति विषयमाश्रित्य नारायणतीर्थैः महती चर्चा प्रस्तुता। अत्र च आचाण्डालयोनि सर्वोऽपि जीवः भक्तौ अधिकारीति न केवलं संस्कृतेन भाषयाऽपिलौकिक्याकृतं भगवद्गुणगानं भगवत्प्राप्तिं ददाति इति च नारायणतीर्थैः महताऽदरेण निरूपितम्। वेदान्तप्रवणत्वात् तैश्च ज्ञानं भक्तिश्च द्वावेव मोक्षमार्गाविति समर्थितम्। कर्मणः षट्प्रकाराःकथिताः जीवस्योत्क्रान्तिमार्गोऽपि सम्यग् वर्णितः। वेदस्यापौरुषेयत्वं पशुहिंसा, अर्थवादश्चेत्येतादृशाः बहवो विषयाः अध्यायेऽस्मिन् चर्चिताः।

नारायणतीर्थास्तावत् पूर्णरूपेण वेदान्तिनः। तत्रापि तेषाम् अद्वैत एव महान् आदरो दरीदृश्यते। अतस्ते भक्तिचन्द्रिकायां बहुषु स्थलेषु

स्वकीयाम् अद्वैतनिष्ठां प्राकाशयन्। तादृशस्थलानां विवेचनमेकत्र कृतमस्मिन्नेवाध्याये।

बहुषु स्थलेषु नारायणतीर्थैः अद्वैतसमन्वय एव कृतः[1] अद्वैतपक्षीयं व्याख्यानमेव साधीय इति कण्ठशः उक्त्वा स्वीकृतम्[2]भेदः केवलमविद्याजन्य इति[3]अत एव मिथ्येति कथयित्वा मिथ्याविचारोऽपि तैः प्रस्तुतः[4]ब्रह्म निवर्तोपादानमिति[5] जीवस्तु विवर्ताधिष्ठानमेवेति[6] च तैरद्वैतसिद्धान्तरीत्यैव तत्र तत्र स्पष्टतया स्व्यकारि। विशेषतया अद्वैतवेदान्तस्वीकृतायाः अनिर्वचनीयख्याते–र्विचारोऽपि तैः श्रद्धया पुरस्कृतः।[7]

अतः संपूर्णे भक्तिचन्द्रिकाव्याख्याने नारायणतीर्थानाम् अद्वैतप्रियता अद्वैतनिष्ठा च स्फुटे। कुत्रापि अद्वैतशास्त्रविरोधो माऽभूत् इति धियैव नारायणतीर्थैर्व्याख्यानं श्रद्धया कृतम्। तथापि भक्तेरपि अद्वैते विरोधो कथं न भवेदित्यापि तैरत्र विवेचितम्। एवं नारायणतीर्थानाम् अद्वैतनिष्ठापराणि सर्वाणि वाक्यानि चतुर्थेऽस्मिन् अध्याये विस्तरशः चर्चितानि। विशेषतः 'ब्रह्मसंस्थोऽमृतत्वमेतीत्यस्य श्रुतिवाक्यस्य नारायणतीर्थैः कृतं भक्तिपरकं व्याख्यानमपि अध्यायेऽस्मिन् विवेचितम्।

भक्तिचन्द्रिकाव्याख्याने शास्त्रविषयकाः संदर्भाः नारायणतीर्थैर्यत्र यत्र दर्शितास्तेषामाधारेण नारायणतीर्थानां शास्त्रवैदुष्यमवगमयितुं कश्चन प्रयत्नोऽत्र कृतः। सांख्य–योग–न्याय–पूर्वमीमांसा–वेदान्त–व्याकरणादिशास्त्रवैदुष्यं यत् नारायणतीर्थैः भक्तिचन्द्रिकायां आविर्भावितं तस्य विवेचनमत्र कृतम्।

सर्वेष्वपि शास्त्रेषु नारायणतीर्थानाम् अद्वैतनिष्ठा, मीमांसाप्रामाण्यमित्यादिकं प्रामुख्यं वहति। मीमांसाशास्त्रमेव प्रमाणयन्ति

नारायणतीर्थास्तथापि आवश्यकतायां तस्य शास्त्रस्य खण्डनमपि कुर्वन्ति।[8]

अद्वैतप्रियत्वेऽपि शुद्धाद्वैतस्य च खण्डनं कृतम्[9] विशिष्टाद्वैतमतं प्रदर्श्य तन्न युक्तिसहमिति प्रदर्शितम्[10] मीमांसाप्रमाणाः सन्तोऽपि नारायणतीर्थाः मीमांसाशास्त्रमते दोषान् दर्शयित्वा तदपि निराचक्रुः। इत्थमेते पक्षपातदृष्टिमनवलम्ब्य शास्त्ररीतिमेवानुसृत्य व्याख्यानं व्यधुरिति पञ्चमेऽस्मिन्नध्याये सप्रमाणं विवेचितम्।

शाण्डिल्यभक्तिसूत्राणां स्वप्नेश्वरभाष्यम् अभिनवभाष्यं नारायणतीर्थभक्तिचन्द्रिकाव्याख्यापनमित्येते त्रयोऽपि समुपलब्धाः ग्रन्थाः। स्वप्नेश्वराचार्याणां ग्रन्थः प्राचीनतम इति विद्वन्मतम्। अभिनवभाष्यञ्च तदुत्तरकालिकं तत् क्वचित् स्पृशति। अतः एकस्यैव ग्रन्थस्य व्याख्याकरणे त्रयाणामपि कुत्र मतभेदो भवति तत्र च प्रमाणं कथं दर्शितम्। पाठभेदकल्पनेन च क्वचित् स्वाभीष्टार्थः कथं वा तैः साधित इति षष्ठेऽध्याये सप्रमाणं विवेचितम्। त्रिष्वपि ग्रन्थेषु सूत्रव्याख्यानावसरे क्वचित् पाठभेदं कल्पयित्वा सूत्रार्थः अन्यथैव व्याख्यातो दृश्यते। प्रमाणप्रदर्शनसमयेऽपि नारायणतीर्थैः बहुधा श्रुति–स्मृति–ब्रह्मसूत्र पुराणादिवाक्यानि प्रमाणतयोद्धृतानि। स्वप्नेश्वराचार्यैस्तु पुराणवाक्यैः सह गीतावाक्यान्येवोदाहृत्य सूत्रार्थो वर्णितः। एवं त्रिष्वपि मतभेदस्य स्थानानि चित्वा तेषां विवेचनमस्मिन्नध्याये कृतम्।

भक्तिचन्द्रिकायाः समग्राध्ययनेन ज्ञायते यत् नारायणतीर्थाः स्वव्याख्येयग्रन्थस्य तच्छास्त्रस्य च गाम्भीर्यं सम्यगवगम्यैव व्याख्यानं कुर्वन्ति, अत एव क्वचिदन्येषां व्याख्यातॄणां मतान्यपि दर्शयित्वा

स्वग्रन्थमहत्त्वं रक्षन्ति इति। न केवलं प्रसिद्धेभ्यः स्वप्नेश्वरादिव्याख्यानेभ्यः अपि तु संप्रति अनुपलब्धेभ्योऽपि ग्रन्थेभ्यस्ते तेषां मतानि ग्रन्थे उपस्थाप्य खण्डयन्ति, अन्यथा चिन्त्यमिति चिन्तास्थानं प्रदर्शयन्ति। नारायणतीर्थानां व्याख्याने क्रमशः श्रुति–स्मृति–पुराणेतिहासगतानि प्रमाणानि प्रदर्श्यन्त इति पठितृणां विदुषामानन्दो भवति।

"वस्तुतः भगवान् परमात्मा नित्यज्ञानादिलक्षणोऽपि सदैकरूपो भक्तवात्सल्याद्यनेकगुणोल्बणो ब्रह्मविष्णुशिवनारायणरामकृष्णादि शब्दैश्च व्यपदेश्यः सर्वजीवनियन्ता जीवस्तु पितुः पुत्र इव तदंशः अनाद्यज्ञानपाशबद्धः कथञ्चित्प्राक्तनानेकशुभादृष्टबलाद् विविदिषया सद्गुर्वाश्रयणेन ईश्वरबुद्ध्या भगवत्सायुज्यमवाप्नोति" इति नारायणतीर्थैः शास्त्रसारः प्रदर्शितः[11] स्वसंकल्पपूर्वकपराधीन व्यक्तीकृतदेहो भक्तवात्सल्यादि–अनेकगुणोल्बण एव अवतार इति च अवतारस्वरूपं विवेचितम्[12]कीर्तनादि साधनभक्त्या ज्ञानं प्राप्य साधकः पराभक्तिमाप्य भगवत्सायुज्यमवाप्नोति। कीर्तनं वैदिकमेव तस्मिन् चाण्डालादीनामप्यधिकारोऽस्ति[13]भाषयाऽपि कीर्तनं कर्तुं शक्यते।[14]

श्रवणादिपरिपाके च साक्षात्कृतात्मतत्त्वस्य **समाधौ** कूटस्थाभिन्ने ब्रह्मणि सच्चिदानन्दघनेऽनवच्छिन्ने रतिविशेषरूपं प्रेम भवति, **व्युत्थाने** तु दग्धपटवत् प्रमातृत्वादिव्यवहारमनुसृत्य कीर्तनादिभक्तिः भवतीति अद्वैते भक्तिः कथं समन्वयं भजतीति दर्शितम्[27] समाधौ व्युत्थाने च योगी सर्वं न वेत्तीति सरहस्यं प्रतिपादितम्। येषां भगवति अनुरागः परिपक्वस्ते भगवदभेदरूपां भगवत्प्राप्तिमनुभवन्ति, अपक्वानुरागास्तावत् साधनभक्त्या तल्लोकमेव व्रजन्ति।[16] साधकेन सद्वासनादार्ढ्यं

दृष्टसामग्रीतो यत्नविशेषेण संपादनीयमेव। मनुष्यप्रयत्न एव प्रारब्धापेक्षया बलवान्। केवलादृष्टे भारनिक्षेपः अनुचितः इति तत्त्वं कथितम्[17] मोक्षे ज्ञानं भक्तिश्चेति द्वावेव मोक्षमार्गौ। मार्गद्वयमित्येवास्माकीनः पन्थाः।[18] जगदर्थिनां पुरुषार्थाद् भ्रंश एव भवति[19]अन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव क्रमेण विशिष्टेषु वैदिकवाक्येषु कर्तृत्वमेव ब्रह्मणो वेदकर्तृत्वम्।[20]कारणेनेश्वरेण कार्यस्याभेद एव तस्मिन् सत्येव ब्रह्मज्ञानात् सर्वविज्ञानद्वारा वैराग्यं भवति। ततश्च अनन्यभक्त्या भगवत्प्राप्तिर्भवति।[21]

इत्यनयारीत्या भक्तिचन्द्रिकाव्याख्यानतो नारायणतीर्थानां सिद्धान्तसारः अवगन्तुं शक्यः। ते तावत् वेदान्तिनः, योगिनः, शास्त्रज्ञाः भक्ताश्चेति तदीयव्याख्यानस्य अध्ययनद्वारा, जीवानां चित्तशुद्धिद्वारा तत्त्वज्ञानसम्पादनयोग्यता भवतु ततश्च पुरुषार्थमपि सर्वे लभन्तां स्वाधिकारानुसारमिति नारायणतीर्थानां पवित्रस्मरणपूर्वकं विरम्यते।

———

## संदर्भसूची

1. भ.च.पृ.46, 61, 88, 89, 161, 192, 193

2. तत्रैव पृ.90

3. तत्रैव पृ.89

4. तत्रैव पृ.94

5. तत्रैव पृ.93

6. तत्रैव पृ.203

7. तत्रैव पृ.205

8. तत्रैव पृ.106

9. तत्रैव पृ.192

10. तत्रैव पृ.86, 88

11. तत्रैव पृ. 91

12. तत्रैव पृ. 114

13. तत्रैव पृ. 155

14. तत्रैव पृ. 159

15. तत्रैव पृ. 162

16. तत्रैव पृ. 167

17. तत्रैव पृ. 175

18. तत्रैव पृ. 182

19. तत्रैव पृ. 191

20. तत्रैव पृ. 195

21. तत्रैव पृ. 202

----